** श्रीः **

→** हरिदास-संस्कृत-ग्रन्थमाला **←

२९

महाकविश्रीबाणभट्टविरचितं

# हर्षचरितम्

( प्रथम उच्छ्वासः । )

जयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन, राजगुरुकथाभट्टवंश्येन, वेदान्त-भूषणोपाधिभूषितेन भूतपूर्वकाशिकागवर्नमेण्टसंस्कृतपुस्तकालयीयप्रत्नतत्वा-न्वेषणापरायणेन, भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारक-समितिसदस्येन, जयपुरराजकीयसंस्कृतपाठशालाध्यापकेन,

कथाभट्ट श्रीनन्दकिशोर शर्मणा साहित्याचार्येण,

निर्मितया

जयश्रिया संस्कृतव्याख्यया कथाभट्टीयाख्य हिन्दीव्याख्यया

च समलङ्कृतम् । तेनैव च संशोध्य सम्पादितम् ।

---

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः

चौखम्बा संस्कृत सीरिज आफिस,

बनारस सिटी ।

---

द्वितीयं संस्करणम् ।

---

१९९७.

# DEDICATION.

[ With permission ]

*To-*

Air Commodore His Highness Raj-Rajeswar,
Saramad-a-Rajhai Hindustan Maharajadhiraj—

**SIR SHRI UMAID SINGHJI SAHIB BAHADUR**

**G. C. S. I., G. C. I. E., K. C. V. O, A. D. C, L. L. D.**

The renowned Ruler of Jodhpur ( Marwar ), Head of the Rathore Race, Flower of the Solar Dynesty, the famous scion of the holy line of Shri Ramchandraji, a patron of learning, a munificent donor, index of Chivalry and heroism, representative of the Kamadhaja Rathores, This humble book, The first chapter of HARSHA CHARITA'S, with Sanskrit Commentary JAYASHRI and KATHA-BHATTIYA-Hindi Commintary:—

The Life of the Emperor Harshavardhan of KANAUJ-( the kingdom conquered by the ancient

heroes of the Rathores of whom His Highness is the glorious head ),

Is most respectfully dedicated as a mark of high honour, loyal devotion, and sincerest good wishes, by the *Katha Bhatta Pandit Nandkishor Sharma Sahityacharya*, research-Scholar, a direct descendant ( great-grandson ) of the famous Pandit Namawal Rajguru Katha-Bhatta Shri Chhote Lalji ( who was the grandson of Namawal Pandit Jagan Nathji of Pohkaran ( in Marwar ), the Guru and priest of Her Highness Maji Sahiba champawatji-Chandra Kanwariji—daughter of Thakur Salim Singhji Chanpawat of Pohkaran ( in Marwar ) and wife of His Highness Maharaja Jagat Singhji of Jaipur. )

THE CHAMPAWATJI'S TEMPLE, Jaipur,

*By* THE AUTHOR.

# प्रस्तावना ।

श्रीमद्बाणभट्टविरचिताया हर्षचरिताख्यायिकायाः प्रथम उच्छ्वासः काशिक-राजकीयसंस्कृतपाठशालीय (गवर्नमेण्टसंस्कृतकालेज) साहित्य-मध्यमपरीक्षापाठ्यत्वेन निर्धारितो वर्त्तत इति तदुपयुक्तामभिनवां 'जयश्री' नामिकां तट्टीकामारचय्यासौ सटीकः प्रकाश्यते । टीकाकर्त्रा स्वपितुः श्रीजयचन्द्र-शर्मणो नाम्ना समान्येवाक्षराणि समवलम्ब्य जयस्य श्रीर्जयश्रीरिति व्याख्याभि-धानमुपकल्पितम् । यद्यपि बम्बईकलकत्ताकाशिकासु प्रकाशित टीकात्रयं मुद्रित-मुपलभ्यते । तथाप्येतासु प्रथमा व्याख्या प्रौढा संक्षिप्ता च, द्वितीया बङ्गदेशप्रच-लितपाठ्युता, तृतीया चालङ्कारादिपरीक्ष्यविषयप्रतिपादनशून्येति मत्वास्माभिर-भिनवं व्याख्यानं निर्मितम् । व्याख्यानावसरे च मूलसंशोधनार्थमपि प्रयतितम् । छात्राणामुपकृतये च प्रथमोच्छ्वासीयकथासारः संगृहीतः ।

## बाणभट्टः ।

अस्य हर्षचरितस्य निर्माता(१) बाणभट्टः स्थाण्वीश्वराधिपस्य श्रीहर्षवर्धन-महाराजस्य समये ( ६०७-६४८ ई० ) अवर्त्तत । बाणेन हर्षचरितप्रथमोच्छ्वासे "कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात्" इत्यग्निपुराणोक्ताख्यायिकालक्षणा-नुसृत्या स्ववंशपरिचयो विस्तरशो निवेदितः । तथा हि पारेशोणनदं पश्चिमायां दिशि प्रीतिकूटो नाम ग्रामः (शाहाबादप्रान्ते) अस्यावासभूमिः, भार्गववंशीयश्चित्र-भानुः पिता, माता च नाम्ना राज्यदेवी । सूर्यशतकनिर्मातुर्मयूरकवेर्भगिनी बाण-भट्टस्य धर्मपत्नी बभूव । मयूरकविरपि हर्षवर्धनमहाराजसभापण्डितोऽवर्त्तत ।

---

(१) "बाणस्तु तच्छ्रुत्वा समुत्सृज्य निद्रामुत्थाय प्रक्षाल्य वदनमुपास्य भगवतीं सन्ध्यामु-दिते भगवति सवितरि गृहीतताम्बूलस्तत्रैवातिष्ठत् । अत्रान्तरे सर्वेऽस्य ज्ञातयः समाजग्मुः । परि-वार्य चासाञ्चक्रुः । असावपि पूर्वोद्घातेन विदिताभिप्रायस्तेषां पुरो हर्षचरितं कथयितुमारेभे" । ( हर्षचरिते तृतीयोच्छ्वासे )

## अयं चास्य वंशवृत्तः—




## हर्षवर्धनः सम्राट् ।

बाणभट्टस्य संरक्षको गुप्तवंशाङ्कुरो हर्षवर्धनाख्यो महाराजः प्रथमं स्थाण्वीश्वरे ( थानेसर ) स्वराजधानीं कल्पितवान्, ततश्च कान्यकुब्जदेशे। अनेन भारतवर्षोत्तरखण्डस्य साम्राज्यम् ६०६–६४८ ईशवीयवर्षं यावदुपभुक्तम्। बौद्धधर्मानुचरोऽप्यसौ सनातनधर्मविहितमूर्तिपूजाऽविरोधी बभूव। एतद्वंशपरम्परासौ(१)—

(१) एपिग्राफीया इन्डिका ( वाल्युम ४ सेप्टेम्बर सन् १८९६ ई० )। मधुवन ( आजमगढ़प्रान्ते ) ग्रामोपलब्धे ताम्रपत्रे तथा वंशखेर ( शाहजहांपुरप्रान्ते ) ग्रामप्राप्ते ताम्रपत्रे चेयं वंशपरम्परा समुत्कीर्णा।

नरवर्धनः ( =वज्रिणीदेवी )
राज्यवर्धनः ( =अप्सरोदेवी )
आदित्यवर्धनः ( =महासेनगुप्ता )
प्रभाकरवर्धनः ( =यशोमती )



राजवर्धनः श्रीहर्षवर्धनः राज्यश्रीः ( कन्या )

( मौखरिवंश्यः कान्यकुब्जाधिपो ग्रहवर्मा पतिः )

अनेन महाराजेन रत्नावली, प्रियदर्शिका, नागानन्दं चेति रूपकग्रन्थत्रयं निर्मितमिति कथ्यते । हर्षवर्धनराज्यप्रणाली हुएन्त्साङ्गाख्येन चीनदेशीययात्रिणा स्वयात्रेतिहासे वर्णिता दृश्या । दिवङ्गते श्रीहर्षेऽस्यैव प्रधानमन्त्री नाम्नार्जुनाख्यः स्वयमेव राज्याधिकारी बभूव ।

## बाणभट्टग्रन्थाः ।

अनेन हर्षचरिताख्यायिका ६२० ई० वर्षे निर्मिता । आख्यायिकालक्षणं तु ग्रन्थे ८ तथा ११४ पृष्ठे लिखितं द्रष्टव्यम् । आख्यायिकाकाव्यं च भारतवर्षे बहोः कालात्प्रथितमासीत् । तथाहि—अग्निपुराणे तावदाख्यायिकालक्षणं विशदीकृत्य प्रतिपादितम् । कात्यायनेन "आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ठवक्तव्यः" इति वार्तिके आख्यायिकानामोपात्तम् । पतञ्जलिना च वैयाकरणमहाभाष्ये ( अधिकृत्य कृते ग्रन्थे ४।३।८७ सूत्रे ) वासवदत्ता, सुमनोत्तरा, भैमरथी, इति तिसृणामाख्यायिकानां निर्देशो व्यधायि । अमरकोशे—

"आख्यायिकोपलब्धार्था पुराणं पञ्चलक्षणम् ।
प्रबन्धकल्पना कथा प्रवह्लिका प्रहेलिका ॥" इत्युक्तम् ।

ततश्चाग्रे भामहेन दण्डिना चास्याः स्वरूपं विवर्णितम् । इत्थमाख्यायिकायाः प्रसारः क्रमविकासश्चासीदिति संकोचभिया स्वल्पमेवात्र निवेदितम् ।

हर्षचरिते श्रीहर्षवर्धनाख्यमहाराजस्य जीवनचरितं वर्णितमास्ते । हर्षजन्मोत्सवे कारागारबद्धानां कारागृहतो मोक्षो वर्णित इति प्राचीना भारतीयानां राजनीतिरस्माज्ज्ञातव्या । गद्यलेखनशैली चात्रोत्तमा प्रौढा दीर्घतमसमासयुता मनोरमा च । प्रथमोच्छ्वासेऽभिहितानां पात्राणां पूर्वेषां कवीनां काव्यानां चेमानि नामानि ।

## ग्रन्थस्थपात्रनामानि ।

अक्षमाला ( दधीचभ्रातृपत्नी )
अच्युतः
अर्थपतिः ( बाणस्य पितामहः )
अहिदत्तः
ईशानः
कविः
कुबेरः
चाक्षुषः
चित्रभानुः ( बाणस्य पिता )
च्यवनः ( ऋषिः )
जातवेदाः
दक्षः ( प्रजापतिः )
दधीचः ( च्यवनपुत्रः )
दुर्वासाः ( मुनिः )
धर्मः
पाशुपतः
बाणभट्टः ( ग्रन्थकर्त्ता )
बाणस्य सहायाः सुहृदश्च

ब्रह्मा
भृगुः ( ऋषिः )
मनुः ( प्रजापतिः )
मन्दपालो मुनिः
महीदत्तः
मालती ( दधीचदूती )
राजदेवी
लक्षः
वत्सः
विकुक्षिः
विश्वरूपः
शर्यातराजः
शुचिः
सरस्वती
सारस्वतः
सावित्री
सुकन्या
हरः
हर्षवर्धनः सम्राट् ( चरित्रनायकः )

# अत्रोद्धृतग्रन्थग्रन्थकाराः ।

आढ्यराजः ( नर्तनग्रन्थकर्ता )

कालिदासः ( रघुवंशादिकर्ता )

प्रवरसेनः ( सेतुबन्धकाव्यकर्ता )

बृहत्कथा ( गुणाढ्यकृता )

भासः ( नाटककारः )

वासवदत्ता ( सुबन्धुकृता आख्यायिका )

व्यासः ( महाभारतकर्ता )

सातवाहनः ( गाथासप्तशतीकर्ता )

हरिचन्द्रः ( जैनकविर्गद्यकाव्यकर्ता )

कादम्बरीकथाकाव्यमपि कविनानेनैव प्रणीतम् । कथाकाव्यं कल्पितवृत्तमवलम्ब्य विस्तृतवंशपरिचयरहितेनानवद्येन गद्येन निर्मीयते । आख्यायिका च सत्यवृत्तमाश्रित्य विस्तृतवंशपरिचयसहितेन गद्येनेति स्थूलरीत्यानयोर्भेदः प्रत्येतव्यः । यथाऽऽहाख्यायिकां भामहः—

"वक्त्रं चापरवक्त्रं काव्ये काव्यार्थशंसिनि ।
सत्यार्थेन सुसम्बद्धे तथोच्छ्वासैः परिष्कृते" ॥ इति ।

अस्याः कादम्बर्या उत्तरभागो बाणभट्टपुत्रेण पुलिनभट्टेन निर्मितः । यथोक्तं तत्प्रारम्भे—

"देहद्वयार्धघटनारचितं शरीरमेकं द्वयोरनुपलक्षितसान्धभेदम् ।
वन्दे सुदुर्घटकथापरिशेषसिद्धयै स्रष्टेर्गुरू गिरिसुतापरमेश्वरौ तौ ॥१॥
कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम् ।
भीतोऽस्मि यन्न रसवर्णविवर्जितेन तच्छेषमात्मवचसाप्यनुसन्दधानः" ॥ २ ॥ इति ।

बाणभट्टो गद्यकाव्यनिर्माणे सिद्धहस्तोऽद्वितीय आसीदत एव "बाणोच्छिष्टं जगत्सर्वम्" इति "कादम्बरीरसज्ञानामाहारोऽपि न रोचते" इति च प्रकीर्त्यते । अनेनैव कविना चण्डिकाशतक–पार्वतीपरिणय–सर्वचरित–मुकुटताडितकादीनि नाटकान्यपि रचितानीत्यभिधीयते ।

## उपसंहारः ।

एवमत्र छात्राणां ज्ञानाय ग्रन्थग्रन्थकारादिपरिचयो विस्तरभिया स्वल्पतर एव समुपात्तः । सर्वं चेदं कार्यं श्रीयुतजोधपुरनरेशानां करकमलयोः समर्पितुमनास्तत्सेवायां तदर्थं प्रार्थयमानस्तैस्तदादेशेनानुगृहीतोऽयं जनः इति संरक्षकानेतान् श्रीयुवराजसमेतान् शुभाशीर्वादैः सादरं संयोजयते ।

आगराविश्वविद्यालयीयपरीक्षाध्यक्षेभ्यः श्रीश्यामसुन्दरशर्म एम. ए. महोदयेभ्यः, जयपुरराजकीयशिक्षाविभागाध्यक्षेभ्यः श्रीविलियम ओवेन्स बी. एम. बी. ई. महोदयेभ्यो मदीयानुग्राहकेभ्यश्च सादरं धन्यवादाः प्रदीयन्ते ।

श्रीगुरुवरेभ्यः काशिकराजकीयगवर्नमेण्टसंस्कृतपाठशालाध्यक्षेभ्यः श्रीगोपीनाथकविराज एम. ए. महाशयेभ्यः, जयपुरराजकीयसंस्कृतपाठशालाध्यक्षेभ्यो महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदिमहाशयेभ्यश्च मदीया हार्दिकी श्रद्धा समर्प्यते ।

काशी—चौखम्बा—बनारस—हरिदास—मिथिला—ग्रन्थमालासञ्चालकाभ्यां श्रीजयकृष्णदासहरिदासगुप्तमहोदयाभ्यां श्रेष्ठिप्रवराभ्यामपि साधुवादप्रदानं परमावश्यकं कर्म । एतयोरेव मुद्रणव्ययेन पुस्तकमिदं विदुषां करकमलमलङ्करुते ।

अत्र च प्रमादादिस्खलितविचिकित्सायां वर्तमानायाम्—

"आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः" ॥

इति कालिदासीयसुभाषितेन सन्तुष्यन्निदमभ्यर्थयते परमेश्वरं यदियं व्याख्या छात्राणां विदुषां च लाभदायिनी सन्तोषकरी च स्यादिति—

हर हाइनेस माजी श्रीचांपावतीजो-
मन्दिरम् । जयपुरम् ।
वसन्त पञ्चमी
संवत् १९९०

विदुषामाश्रवः—
कथाभट्ट नन्दकिशोरशर्मा
साहित्याचार्यः

॥ श्रीः ॥

# द्वितीयसंस्करणे प्रास्ताविकम् ।

जयश्रिया संस्कृतव्याख्यया विभूषितोऽयं हर्षचरितप्रथमोच्छ्वासोऽस्माभिः प्रकाशितपूर्वो लोकप्रियतया छात्राणां विदुषां चोपयोगितया च सर्वैरात्मसात्कृतो नावशिष्टोऽधुनास्माकं सविध इति पुनर्मुद्रणस्यायं शुभावसरः समायात इति परम-सन्तोषमासाद्य प्रचुरप्रमोदमावहति नो मानसम् । काशिकराजकीयसंस्कृतपाठ-शालीयसाहित्यमध्यमाचतुर्थखण्डपरीक्षायां पाठ्यत्वेन निर्णीतपूर्वोऽप्ययमस्मिन्वर्षे सर्वविधशास्त्रिपरीक्षाद्वितीयखण्डेऽपि पाठ्यत्वेन निर्णीतः पाठ्यनिर्धारकसमित्येति द्वितीयं प्रभूतप्रमोदस्थानमस्माकं स्वान्तस्य । पुनर्मुद्रणेच्छया प्रेरितेन मया जय-श्रिया व्याख्यया समं कथाभट्टीयाख्यहिन्दीव्याख्यापि द्वितीयसंस्करणेऽस्मिन् समा-वेशितेति तृतीयं प्राज्यप्रमोदनिकेतनमस्मन्मनसः ।

प्रथमसंस्करणप्रस्तावनायां हर्षचरितकथानायकस्य श्रीहर्षवर्धनसम्राजो बाण-भट्टस्य, एतद्ग्रन्थस्य च सम्बन्धे संक्षिप्तोक्तमस्माभिरिति नात्र तद्विषयेऽधिकं कि-ञ्चिद्वक्तव्यं पुनरुक्तभिया । केवलं कविमाहात्म्यातिशयद्योतकानि कानिचिद्रुचि-कराणि सुभाषितानि सङ्गृह्य पाठकानां पुरः स्थाप्यन्ते । यथा—

"श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽ-
लङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने ।
आः सर्वत्र गभीरधीरकविताविन्ध्याटवीचातुरी-
सञ्चारी कविकुम्भिकुम्भभिदुरो बाणस्तु पञ्चाननः" ॥

"जाता शिखण्डिनी प्राक् यथा शिखण्डी तथावगच्छामि ।
प्रागल्भ्यमधिकमाप्तुं वाणी बाणो बभूव" ॥

"युक्तं कादम्बरीं श्रुत्वा कवयो मौनमास्थिताः ।
बाणध्वनावनध्यायो भवतीति श्रुतिर्यतः" ॥ (।का० कौ० भाग २ )

"केवलोऽपि स्फुरन्बाणः करोति विमदान्कवीन् ।
किं पुनः क्लृप्तसन्धानः पुलिन्दकृतसन्निधिः" ॥ ( तिलकमञ्जरी )

"हृदयवसतिः पञ्चबाणस्तु बाणः" ( जयदेवः ) ॥ इति ।

## हर्षचरितटीकाः ।

रसिककविविरचितायाः श्रीहर्षचरितवार्तिकव्याख्याया निर्देशः काव्यमाला १६७ संख्यायां ( १८८८ ई० ) वर्तते । रङ्गनाथविद्वद्विरचितहर्षचरितमर्मावबोधिनीटीका मद्रासपुस्तकालये निहितेति महामहोपाध्यायकुप्पुस्वामिशास्त्रिसम्पादितात

लिखितपुस्तकसूचीपत्रात्प्रतीयते ३ वा० १ पार्ट सी० नं० २७०३। काश्मीरकेण राजानकपुण्याकरपुत्रेण शङ्करभट्टेन निर्मिता सङ्केताख्या व्याख्या बम्बईनगरे मुद्रिता, म० म० जीवानन्दविद्यासागरमहोदयेन प्रणीता विवृतिरमलाभिधाना कालिकातानगरे मुद्रिता, गुरुप्रसादाचार्यमहोदयेन विरचिता प्रथमोच्छ्वासटीका राजलक्ष्मीः काश्यां प्रकाशमिता। आसां विषये प्रस्तावनायां यत्किञ्चिदुक्तं तदेव पर्याप्तमिति नात्राधिककथनस्यावश्यकता। रायसाहिब पं० श्रीभवदत्तशर्मणा दाधिमथेन १९१६ ई० वर्षे विरचिता पञ्चमोच्छ्वासटीका भावबोधिनी मुद्रिताऽजयमेरुनगरे। सा च टीका व्युत्पादयित्री मनोरमा च। प्रस्तुतसंस्करणे जयश्रीटीका। एतस्या इयमावृत्तिर्द्वितीया श्रीमतां पुरस्तादेवेति किमधिकं वक्तव्यम्।

## कथाभट्टीया हिन्दीभाषाटीका।

इयं व्याख्या हिन्दीभाषानुरागिणां कृतेऽत्रायोजिता। टीकाकारस्य प्रपितामहः सुविदितो जयपुरमहाराजश्रीरामसिंहदेवगुरुः श्रीछोटेलालापराभिधः श्रीहरगोविन्दमहानुभावो महाभारतपुराणकथापीयूषवर्षतया कथाभट्टपदवीसमलङ्कृत आसीदिति तत्परमपवित्रस्मृत्यर्थं टीकाया अस्याः कथाभट्टीयेति नामधेयं निर्धारितम्।

## श्रीहरगोविन्दमहोदयः।

अस्य महानुभावस्य पितामहो जगन्नाथमहोदयो नामावालोपनामकदाधिमथविप्रकुलप्रसूतो योधपुरान्तर्गतपोकरणग्रामाधीशस्य गुरुः पुरोहितश्चासीत्। पोकरणस्वामिठाकुरश्रीदेवीसिंहस्य पुत्रः शबलसिंहस्यानुजः श्रीश्यामसिंहदेवः केनापि हेतुना पोकरणं परित्यज्य पूर्वं भरतपुरे ततो जयपुरे चायासीत्। एतेनैव ठाकुरश्यामसिंहमहोदयेन जयपुराधीशश्रीपृथ्वीसिंहमहाराजतः १८३० विक्रमवर्षे गीजगढाधिपत्यं समधिगतम्। अनेनैव ठाकुरश्यामसिंहमहोदयेन सार्धं पोकरणतो जगन्नाथमहोदयो जयपुरे समागत्य तत्संरक्षकत्वे न्यवसत्। जगन्नाथस्य ज्येष्ठपुत्रो जयकृष्णस्तस्मात्सुरूपादेव्यां १८६६ वैक्रमे वर्षे आश्विनकृष्णाष्टमीदिने रविवारोपलक्षिते महालक्ष्मीपूजातिथौ चरित्रनायकः श्रीहरगोविन्दमहानुभावोऽजनि। अयं महानुभावोऽल्पीयस्येव वयसि महाविद्वानद्वितीयकथावाचकश्चासीत्। अत एवानेन जयपुरनरेशश्रीजगत्सिंहमहाराज्ञ्यै चाम्पावतीश्रीचन्द्रकुमारिकायै श्रीभागवतकथा १८९३ वैक्रमे वर्षे श्राविता। अनया कोटखावदाख्यस्वग्रामस्यैकः सभूमिकः कूपो भागवतकथाया उपहारी कृतः। बाजडोलीग्रामस्य ब्रजग्रामस्य चैकैकं कूपं सभूमिमियं राज्ञी चरित्रनायकाय व्यतरत्। इयं महाराज्ञी चाम्पावती पोकरणाधीशश्रीसवाईसिंहपौत्री श्रीसालिमसिंहपुत्री चासीत्। अस्या जन्म १८४७ वि० वर्षे, विवाहश्च १८६२ वैक्रमवर्षे जयपुरवर्तिनि गीजगढाधीशभवने जयपुराधीशेन सह बभूव।

इयं चात्र पोकरणाधीशगोजगढाधीश चाम्पावतवंशपरम्परा—




कथापीयूषप्लुता महाराज्ञीयं चाम्पावती जयपुरे रम्यं श्रीकृष्णमन्दिरं निर्माप्यास्मै चरित्रनायकाय १८९४ विक्रमवर्षे प्रदाय वैकुण्ठ एव वैकुण्ठोपासनायै १८९९ वत्सरे जगाम । राजमाता चन्द्रावती महोदयापि चन्दलाईनामक स्वग्रामस्य सभूमिकूपमस्मै ददौ कथासन्तुष्टा । असौ श्रीहरगोविन्दमहोदयश्चास्मिन्मन्दिरेऽनवरतमहाभारतकथानिरतो बभूव । माणिक्यचन्द्रश्रेष्ठिना १९०३ वि० वर्षे पुराणघाटोद्याने, लालामोतीलालेन च १९२४ वि० वर्ष जयपुरद्वारनिकटे महाभारतकथायामुद्यानभूमिः सादरमर्पिता । किं बहुना, कथासन्तुष्टेन श्रीजयपुरपुरन्दरेणाप्यसौ महानुभावो जैतपुरा–गोकुलपुरा–रामनिवास–मूण्डोतीग्रामैः सत्कृतश्चामरशिबिकाभ्युत्थानादिसमलङ्कृतो राजगुरुत्वेनाभिमतश्च । विद्याविलासिनीलालितो जयपुरराजसभाप्रमुखपण्डितोऽयं महानुभावश्चाम्पावतीमन्दिरेऽस्मिन्नष्टादशवारं महाभारतं श्रोतृभ्य श्रावयांबभूव ।

पुत्रपौत्रादिसमन्वितोऽनेकमणिभूसम्पत्तिशाली निरामयोऽयं महानुभावो द्वासप्ततितमे वर्षे श्रावणकृष्णनवम्यां १९३७ वत्सरे स्वर्गसुखमनुभवन्—

"अत्यन्तगुणमेधावी चतुर्णामेव भाजनम् ।
अल्पायुरनपत्यो वा दरिद्रो वा रुजान्वितः" ॥

इति कस्यापि कवेः सूक्तं मोघं चक्रे ।

अस्य महोदयस्य राजगुरुकथाभट्ट श्रीवृन्दावन-श्रीनारायण-शिवनारायणाख्यास्त्रयो विद्योतमानाः सूनव आसन् । एतेषां पुत्रपौत्रादयश्चास्मिन्मन्दिरे विद्योतन्तेतमाम् ।

## उपसंहारः ।

जयश्रीनाम्नी संस्कृतभाषाव्याख्या श्रीमतां जोधपुरपुरन्दराणां करकमलयोः सादरमर्पितेति कथाभट्टीयेयं हिन्दीभाषाटीकापि तत्सेवायामेव समर्पयितुमर्हति तदर्थं प्रार्थयमानोऽयं जनस्तदादेशेनानुगृहीत इति संरक्षकानेतान् श्रीयुवराजसमेतान् श्रीजोधपुरपुरन्दरान् शुभाशीर्वादैः सादरं सविनयं संयोजयते ।

यदीयकारुण्यकणिकया समर्पणादेशः समासादितस्तेभ्यो जोधपुरीयप्रधानमन्त्रिप्रवरेभ्यो लेफ्टिटिनेन्ट कर्नल सर डोनेल्ड फील्ड केटी० सी० आई० ई० महोदयेभ्यो मदीयानुग्राहकेभ्यः सादरं धन्यवादाः प्रदीयन्ते ।

पुनर्मुद्रणव्ययभारोद्वाहकाभ्यां काशी-चौखम्बा-बनारस-हरिदास-मिथिलाग्रन्थमालासञ्चालकाभ्यां श्रीजयकृष्णदासहरिदासगुप्तमहोदयाभ्यां श्रेष्ठिप्रवराभ्यामपि साधुवादप्रदानं परमावश्यकं कर्म मनुते—

---

श्रीचाम्पावतीमन्दिरम् ।
जयपुरम् ।
१९९७वि.व.मार्गशीर्षशुक्ल ७

कथाभट्टः श्रीनन्दकिशोरशर्मा
साहित्याचार्यः ।

# प्रथमपरिच्छेदकथासारः ।

पुरा किल भगवान् पितामह इन्द्रादिभिर्देवैर्महर्षिभिश्च सह संलपन्नासीत्। तत्र प्रवृत्ते वेदविद्याविवादे मन्दपालनाम्ना मुनिना सह विरोधं कुर्वन् कोपनो दुर्वासाः सामवेदोच्चारणे स्वरभङ्गं चक्रे । तं स्वरभङ्गं श्रुत्वा सर्वेषु मुनिषु शापभीत्या मौनिषु सत्सु सरस्वती जहास । तदा "रे पापे दुर्वाससं मामुपहससि" इत्यभिधाय तां दुर्वासाः शप्तुं प्रचक्रमे । अत्रान्तरे "त्रिभुवनमातरं सरस्वतीं शप्तुमिच्छसि" इति क्रुद्धा सावित्री स्वासनादुत्तस्थौ । दुर्वासास्तु 'त्वं मर्त्यलोकं याहि" इति सरस्वतीं शशाप । प्रतिशापदानोद्यतां सावित्रीं च सरस्वत्येव न्यवारयत् । अथ ब्रह्मा शप्तां सरस्वतीं विलोक्य दुर्वाससं गर्हयित्वा तामब्रवीत्—"हे सरस्वति ! मा विषादं कुरु, एषा सावित्री त्वामनुगमिष्यति, पुत्रजन्मावधिकश्च ते शापो भविष्यति" इति । ततश्च गृहागतां विषण्णां सरस्वतीं सावित्री प्रदोषे समाश्वासयत् । समाश्वस्ता सरस्वत्यपि परेद्युरुदिते भगवति सवितरि सावित्र्या सह महीतलेऽवततार । अवतीर्य च महीतलं शोणनदतीरस्थलतामण्डपे आवासमारचयत् ।

अथ कदाचित् तत्र निवसन्ती परमेश्वरमाराधयन्ती सरस्वती उत्तरस्यां दिशि अश्वहेषितं श्रुत्वा लतामण्डपाद्बहिर्निर्गत्य ससैनिकमेकेन स्थविरेण चानुगतं तरुणमद्राक्षीत्। स च युवा स्वपदातिमुखात् दिव्यं तत्कन्यायुगलं श्रुत्वा स्वयं च तद्दिदृक्षुस्तत्प्रदेशमाययौ । स्थविरेण विकुक्षिनाम्ना पुरुषेण सह स दधीचाख्यो युवा सविनयं तं लतामण्डपमागत्योपविवेश । सरस्वत्या सह सावित्री तयोरातिथ्यं कृत्वा व्रीडितेव परिचयमेतयोर्जिज्ञासितवती । ततस्तयोर्मध्ये प्रवयाः पुरुषः सप्रश्रयं स्ववृत्तान्तमुवाच—

"अयं दधीचो नाम कुमारो भृगुकुलसमुद्भवस्य च्यवनस्य महर्षेस्तनयो वर्तते । शर्यातराजपुत्री सुकन्याख्या चास्य माता विद्यते । असौ शर्यातनामा राजर्षिरिमं दौहित्रं स्वगृह एव लालितवान् पालितवान्, सकला विद्याश्च पाठितवान् । अथ शर्यातिरधीतविद्यमेनं स्वपितुश्च्यवनस्य निकटे मत्सहितोऽयं प्राहिणोत् । इतश्च नातिदूरे पारेशोणं भगवतश्च्यवनस्याश्रमपदं च्यावनं नाम काननम् । तत्रैव चास्माभिर्गन्तव्यम्" । इत्यस्मद्वृत्तान्तः । "आवां भवत्योरपि नामधामनी श्रोतुमभिलषावः" इति ।

सावित्री प्रत्यवादीत—"अस्माकं वृत्तं कालेन श्रोष्यति भवान् । बहून् दिवसानावामत्र तिष्ठावः" इति । दधीचोऽपि तच्छ्रुत्वोवाच "आर्ये ! करिष्यत्यार्यानुग्रहमस्माकमुपरि । अधुना तिष्ठ । पूर्वं पितृदर्शनायोत्कण्ठितं मनो मे वर्तते तद्

गच्छावः” इति । दधीचोऽपि पितृसद्मनि प्रीतिकूटग्रामे गत्वा कियन्तमपि कालमुवास । सरस्वत्यपि तं युवानं दधीचं विलोक्य तद्विरहेण संतप्ता बभूव । अथ कदाचित् दधीचप्रहितो विकुक्षिः सावित्रीनिकटे आगत्य सरस्वतीकुशलोदन्तं पप्रच्छ उवाच “चास्मत्स्वामी कुमारो दधीचो भवत्योः स्मरति। कुमारवृत्तं समाख्यातुं च मालतीनाम्नी काचिद् दूती भवत्योः सविधे समायास्यति” इति । विकुक्षिः स्वाभिमतं देशं जगाम । मालती च तत्राश्रमे समागता रहसि सरस्वत्यै दधीचविरहावस्थामुवाच । तदा सरस्वत्याभिहिता—“मालति किं वदसि, अयं जनो दधीचाज्ञाकारी वर्तत एव” इति । ततश्च मालत्या बोधितो दधीचस्तत्राश्रमे सरस्वतीनिकटे समायातः सन् यथासुखं संवत्सरकालमेव दिवसमिव रममाणोऽतिवाहयामास। सरस्वती च गर्भं बभार । असूत च सर्वलक्षणसम्पन्नं कुमारम् । ततश्च गतशापा सरस्वती “सर्वा विद्याः स्वयमेवाविर्भविष्यन्तीति” स्वसुताय वरं प्रदाय ब्रह्मलोकमगात् । तद्विरहकातरो दधीचोऽपि स्वपुत्रसम्वर्धनाय स्वभ्रातुर्जायामक्षमालां नियुज्य तपसे वनं जगाम । यस्मिन्दिने सरस्वत्याः पुत्रो बभूव तस्मिन्नेव दिनेऽक्षमालापि पुत्रं सुषुवे । साक्षमाला तु तौ निर्विशेषं पुपोष । तयोरेकः सारस्वताख्योऽपरश्च वत्साख्यो बभूव ।

अथ सारस्वतो मातृवरप्रभावेण यौवनारम्भे एव सर्वविद्यापारगो भूत्वापरं वत्समपि सर्वा विद्या अशिक्षयत् । स्वयं च पितुर्निकटे तपश्चरणाय जगाम । अपरस्माद्वत्साच्च महान् वंशः प्रसृत आसीत् । प्रथमं वात्सायनाख्या गृहस्था एव मुनयो बभूवुः । ततश्च बहुकालानन्तरं तस्मिन्नेव कुले कुबेरो नाम द्विजोऽभवत् । कुबेरस्य चत्वारः सुताः-अच्युतः, ईशानः, हरः, पाशुपतश्च बभूवुः । पाशुपतात् कुमारोऽर्थपतिर्जज्ञे । तस्यैकादश पुत्रा इमे—भृगुः, हंसः, शुचिः, कविः, महीदत्तः, धर्मः, जातवेदाः, चित्रभानुः, त्र्यक्षः, अहिदत्तः, विश्वरूपश्चेति समजायन्त । चित्रभानो राजदेव्यां बाणो नाम सुतोऽभवत् । सोऽयं बाणः शैशवे मात्रा वियुक्तश्चतुर्दशवर्षदेशीय एव पित्राऽपि व्ययुज्यत । अथ बाणः स्वतन्त्रतया नानाविधानि चापलानि कुर्वन्, विविधकलापटुमानवसाहचर्यं विदधत्, देशान्तरं गच्छन्, शनैः शनै राजकुलानि पश्यन् , विद्याभ्यासार्थं गुरुकुलानि समाश्रयन् , स्वकुलोचितां वैदुषीं प्रकृतिमापत् । बहोः कालाच्च तामेव स्ववंशीयावासभूमिं प्रीतिकूटाग्रहारं समाससाद ।

---

# कथासार—हिन्दी।

प्राचीन समय में भगवान् ब्रह्मा इन्द्रादिक देवताओं तथा महर्षियों के साथ आलाप कर रहे थे कि बातों ही बातों में वैदिकविद्या में शास्त्रार्थ होने लगा। इस समय मन्दपाल नामक मुनि से शास्त्रार्थ करते हुये क्रोधी दुर्वासा मुनि ने सामवेद के उच्चारण में स्वर की अशुद्धि की। वहां पर बैठे हुये मुनि लोग दुर्वासा के शाप के भय से कुछ भी नहीं बोले, किन्तु सरस्वती ने उस स्वर की अशुद्धि पर अपनी मन्द मुसकराहट प्रगट की। तब 'रे पापे" मुझ दुर्वासा मुनि का उपहास करती है, यह कहके उस क्रोधी मुनि ने सरस्वती को शाप देने का विचार किया। इस समय "त्रिभुवन की माता देवी शारदा को शाप दिया जाता है, यह विचार कर के क्रुद्ध हुई सावित्री अपने आसन से उठ खड़ी हुई। क्रोधी दुर्वासा मुनि ने तो "तू मर्त्यलोक में जा" यह शाप सरस्वती को देही दिया। दुर्वासा को वापिस शाप देने में उद्यत सावित्र. को सरस्वती ने रोका और कहा कि 'ब्राह्मण तो जन्म मात्र से ही पूज्य हैं, अतः हे सखि! तू यह क्या करती है। इसके बाद ब्रह्मा ने दुर्वासा को भला बुरा कहके "हे सरस्वति दुःख मत करो, यह सावित्री तेरे साथ मर्त्यलोक में निवास करेगी, तथा तेरे पुत्र होने पर यह शाप समाप्त होजायेगा. इत्यादि वाक्यों से सरस्वती का भी आश्वासन किया। इसके अनन्तर घर पर आई हुई सरस्वती को सावित्री ने भी समझाया। दूसरे दिन सूर्योदय होने पर सावित्री के साथ सरस्वती मर्त्यलोक में आई और शोणनद के तीर पर (शाहाबाद जिले में) अपना घर बनाया और वहां ही रहने लगी।

किसी दिन वहां सन्ध्यावन्दन करते समय सरस्वती उत्तर दिशा में किसी घोड़े के शब्द को सुन के अपने लतामण्डप से बाहर आई, और उसने वहां सेनासहित, एक वृद्ध पुरुष से अनुगत, एक युवक पुरुष को देखा। वह दधीच नामक युवक भी अपने सैनिकों से इन दिव्य कन्याओं की सुन्दरता को सुनकर उसी लतामण्डप के निकट आया, और विकुक्षि नामक उस वृद्ध पुरुष के साथ लतामण्डप में बैठ गया। सरस्वती के साथ सावित्री ने इन दोनों का अतिथि सत्कार किया और लज्जित होती हुई इनके परिचय को जानने की इच्छा प्रगट की। तब विकुक्षि नामक वृद्ध पुरुष ने अपना परिचय इस प्रकार बतलाया "यह दधीच नामक कुमार भृगुवंश में होने वाले च्यवन ऋषि का पुत्र है। और इसकी माता सुकन्या महाराज शर्यात की पुत्री है। महाराज शर्यात ने अपने ही घर पर इस दौहित्र (दधीच) का लालन पालन वा पोषण किया और इसे सब विद्याएं पढाई। इस समय महाराज शर्यात अपने दौहित्र को पढ़ा लिखाके अपने जामाता च्यवन ऋषि के निकट मेरी संरक्षकता में भेज रहे हैं। यहां से समीप ही इस शोणनद के दूसरे तीर पर च्यवन मुनि का आश्रम है, वहां तक ही हमको जाना है, यह ही हमारा परिचय है। और हम भी आप दोनों का परिचय प्राप्त करने के लिये उत्सुक हैं।

सावित्री ने यह जवाब दिया कि कुछ समय बाद आप 'हमारे वृत्तान्त से परिचित हो जावेगें। अभी हम यहां बहुत दिनों तक रहेंगी"। यह सुनके युवक दधीच ने

विकुक्षि को कहा कि "ये हमारे ऊपर अवश्य अनुग्रह करेंगी। इस समय ठहरो पहिले पिता के दर्शनों के लिये उत्कण्ठित मन को सन्तुष्ट करना है। अतः पितृगृह चलना चाहिए। इस प्रकार दधीच प्रीतिकूट ग्राम में जाकर कुछ समय तक पिता च्यवन मुनि के निकट रहा। सरस्वती भी उस युवा दधीच को देखके उसके बिना वियोग से क्लेशित होने लगी। कुछ दिनों बाद दधीच ने सरस्वती की कुशलता पूछने के लिये विकुक्षि को भेजा। विकुक्षि ने सरस्वती के निकट आकर उससे कुशल प्रश्न किया और कहा कि "हमारे कुमार दधीच का सन्देश लेकर मालती नामक विश्वस्त दूती आयेगी"। विकुक्षि अपने देश को चला गया। और मालती ने सरस्वती के निकट आकर दधीच की विरह पीडा को समझाया। तब सरस्वती ने उत्तर दिया कि 'सखी! अधिक क्या कहूं यह मनुष्य तो दधीच का आज्ञाकारी है। मालती से सरस्वती के उक्त अभिप्राय को प्राप्त करके दधीच उसके निकट आया और अनेक प्रकार की कामक्रीडाएं करते हुए एक वर्ष को एक दिन के समान बिताया। इसी समय सरस्वती ने गर्भ धारण किया और समय आने पर उसने एक पुत्ररत्न उत्पन्न किया। इस प्रकार शाप की अवधि समाप्त हो जाने के कारण सरस्वती अपने पुत्र को "तू सब विद्याओं का स्वयमेव ज्ञाता होगा' यह वरदान देकर ब्रह्मलोक को चली गई। उसके विरह से कातर दधीच भी अपनी भ्रातृजाया (भौजाई) अक्षमाला को अपने पुत्र का पालन पोषण सुपुर्द करके तपश्चर्या के लिये वन में चला गया। जिस दिन सरस्वती को पुत्र हुआ था उसी दिन अक्षमाला ने भी एक पुत्र को उत्पन्न किया था। अक्षमाला ने इन दोनों पुत्रों का समान रूप से पालन पोषण किया। इनमें एक का नाम सारस्वत और दूसरे का नाम वत्स था।

काल क्रम से सारस्वत अपनी माता सरस्वती के वर प्रभाव से यौवनारम्भ में ही सब विद्याओं का ज्ञाता हो गया, और वत्स को भी सब विद्याएं सिखादी। तथा स्वयं भी अपने पिता की तरह तप करने को वन में चला गया। दूसरे वत्सनामक पुत्र का वंश चला कि जिसमें वात्स्यायन नामक अनेक मुनि हुये। अनेक युगों के अतीत होने पर इस वात्स्यायन वंश में कुबेर नामक एक ब्राह्मण हुआ। इस कुबेर के अच्युत, ईशान, हर, पाशुपत, नामक चार पुत्र हुये। इनमें से पाशुपत के अर्थपति नामका पुत्र हुआ। अर्थपति के भृगु, हंस, शुचि, कवि, महीदत्त, धर्म, जातवेदा, चित्रभानु, त्र्यक्ष, अहिदत्त, विश्वरूप, ये एकादश पुत्र हुये। चित्रभानु के राजदेवी नामक स्त्री में बाणभट्ट नामक पुत्र हुआ। यह बाणभट्ट बालकपन मेंही मातासे वियुक्त हो चुका था कि चौदह वर्ष कीअवस्थामें अपने पिता से भी वियुक्त होगया। अर्थात् इसके माता पिता के स्वर्ग वासी होने के कारण यह स्वतन्त्र हो गया। और अनेक प्रकार की चपलता करता हुआ, अनेक प्रकार के कलाभिज्ञ पुरुषों का साहचर्य करता हुआ भी देशान्तरों को देखने लगा। और अनेक राजकुलों में गया। अन्तमें गुरुकुल में जाकर अपने कुलोचित विद्वत्ता को प्राप्त किया। और बहुत समय के अनन्तर अपनी जन्म भूमि प्रीतिकूट नामक ग्राम में वापिस ही चला आया।

---

## व्याख्याविषयेऽभिमतमिदम्

जयपुरराजकीयसंस्कृतकालेजाध्यक्षाणां
श्रीमतां महामहोपाध्याय-व्याकरणाचार्य-व्याख्यानवाचस्पति—
श्रद्धेयश्रीगिरिधरशर्मचतुर्वेदमहाभागानाम् ।

कथाभट्टश्रीनन्दकिशोरसाहित्याचार्यनिर्मिता हर्षचरितप्रथमोच्छ्वासस्य व्याख्या केषुचित्स्थलेषु मया विलोकिता। छात्राणामुपकारमभिलक्ष्यैवेयं सपरिश्रमं निर्मितेति मे मतिः। विलुप्तप्रायसाम्प्रदायिकाध्ययनाध्यापनेऽस्मिन् काले व्याख्या एवंविधा अत्यर्थमपेक्ष्यन्ते, यत्र समस्तपदविग्रहाद्या व्याकरणांशा वाक्याभिप्रायाश्च स्फुटं प्रतिपाद्येरन्। तदेतां व्याख्यां निर्माय ग्रन्थकर्त्रा संस्कृतसाहित्यस्याप्युपकारः कृतः। व्याख्याशैली प्रौढा श्लाघ्या च। अहमस्याः प्रचारमभिवाञ्छामि।

जयपुर
२३-२-३४

गिरधरशर्मा चतुर्वेदः।

॥ श्रीः ॥

# विषय-प्रतीकः ।

इति शुभम् ।

॥ श्रीः ॥

महाकविश्रीबाणभट्टविरचितं

# हर्षचरितम्

कथाभट्टश्रीनन्दकिशोरशर्मसाहित्याचार्यकृतया

जयश्रिया व्याख्यया समेतम् ।

---

प्रथम उच्छ्वासः ।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ १ ॥

॥ जयश्रीः ॥

दौहित्रं नगराजस्य न पौत्रं कस्यचित्पुनः ।
गिरिजागिरिशापत्यं वन्दे श्रीगणनायकम् ॥ १ ॥

प्रौढप्राज्यपराक्रमो जयपुराधीशो जगत्सिंह इ-
त्याख्योऽभून्महिषी च तस्य विदिता "चाम्पावतीजी"ति या ।
भक्त्या साऽकृत मन्दिरं जयपुरे यस्तत्र विद्योतते
देवं चन्द्रविहारिणं तमसकृद्वन्दे सदा सादरम् ॥ २ ॥

बभूव यः सालमसिंहनामा चाम्पावतः पोकरणप्रशास्ता ।
तदात्मजा चन्द्रकुमार्यराजत, चांपावती साऽकृत मन्दिरं यत् ॥ ३ ॥

तन्मन्दिरे पूजितमिष्टदेवं करेण वंशीं मृदु नादयन्तम् ।
राधासमेतं जयपत्तनस्थं कृष्णं भजे चन्द्रविहारिनाम्ना ॥ ४ ॥

श्रीहर्षचरिते राजलक्ष्म्याऽपि समलङ्कृते ।
जयश्रीनूतना वृत्तिः शोभां वहतु कामपि ॥ ५ ॥

प्रणम्य पितरौ भक्त्या गुरूनपि दयानिधीन् ।
कुर्वे नन्दकिशोरोऽहं वृत्तिं नाम्ना जयश्रियम् ॥ ६ ॥

अभीष्टग्रन्थादौ तत्रभवान् कविः "गद्यं कवीनां निकषं वदन्ति" इत्याद्यनेकैः श्लोकार्थैर्गद्यकाव्यस्य दुरूहत्वप्रतिपादनात् तत्रैव काव्ये कृतश्रमो "बाणोच्छिष्टं जगत्सर्वम्" इत्यादिप्रथितकीर्तिः स्थाण्वीश्वराधिपस्य श्रीहर्षवर्धनमहाराजस्य ( ६०६–६४८ ई० ) राजसभाप्रधानपण्डितः कादम्बरीकथानिर्माता श्रीबाणभट्टः स्वाश्रयीभूतराजचरितमनवद्येनाख्यायिकागद्येन निर्मिमित्सुरविगीतशिष्टाचारपरिपालनाय शिष्यशिक्षणाय च "विद्यामिच्छेन्महेश्वरात्" इत्यादिनयेन विद्यावितरणप्रवणं श्रीमहेश्वरं स्तौति नम इत्यादिना पद्येन । तुङ्गमुन्नतम् । "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः । काव्यप्रणतत्वात् । शिरो मूर्धा चुम्बति स्पृशति तच्छील इति तुङ्गशिरश्चुम्बी चन्द्रः शशी स एव चामरं बालव्यजनं श्वेतरूपत्वात् । तेन चारुर्मनोहारी तस्मै । चन्द्रशेखरायेत्यर्थः । अत्र चन्द्रस्य महेश्वरशिरोभूषणतया तदधीनत्वे शम्भोर्महामहिमशालित्वं ध्वन्यते । त्रयो लोका एव त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तदेव नगरं पुरं पत्तनं वा तस्यारम्भे निर्माणोपक्रमे मूलभूत आधारभूतः स्तम्भः पाषाणस्थूणाविशेषस्तस्मै । शम्भवे महेश्वराय नमो नतिरस्तु ममेति भावः ।

"स्वयम्भूः शम्भुरादित्यः" इति विष्णोर्नामसहस्रे दृष्टत्वादियं विष्णुस्तुतिः, "शम्भू ब्रह्मत्रिलोचनौ" इत्यभिधानकोशे शम्भूशब्दस्य ब्रह्मवाचितया ब्रह्मणोऽपि स्तुतिरेषेति केषाञ्चिदभिमतम् । तथा च विष्णुपक्षे—"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ मही" इति वचनात् तुङ्गं शिरो द्युलक्षणं तच्चुम्बी चन्द्र एव चामरं तेन चारवे । ब्रह्मपक्षे–तुङ्गशिरश्चुम्बी चन्द्रः सुवर्णं तन्मयं चामरमिव चामरं केशपाशस्तेन चारवे । ब्रह्मणो हिरण्यकेशत्वात् । "चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णवारिषु" इति मेदिनीकोशः । त्रैलोक्येत्यादिविशेषणं सर्वत्र समानम् । अत्र कवेरभिप्रायो महेश्वरस्तुतावेव । "हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम्" इति वक्ष्यमाणपद्येन महेश्वरप्रियाया पार्वत्याः एव स्तवनात् । "चुम्बिचन्द्रचामरचारवे" इत्यत्र चकाररकारयोरनुप्रासेन "रम्भस्तम्भशम्भ" इत्यत्र म्भानुप्रासेन न्यसनाद्वृत्त्यनुप्रासः शब्दालङ्कारः । त्रैलोक्ये नगरारोपः शम्भौ मूलस्तम्भारोपं प्रति निमित्तमिति परम्परितरूपकम् । "यत्र कस्यचिदारोपः परारोपणकारणम्" इति साहि-

त्यदर्पणोक्तेः । चन्द्र एव चामरमिति रूपकम् । 'रूपकं रूपितारोपो विषये निरप-ह्नवे" इति साहित्यदर्पणे । अत्र रूपकानुप्राणिता कविहृदि स्थिता शङ्करविषयिणी रतिर्ध्वनिमर्यादया प्रतीयते ॥ १ ॥

## कथाभट्टनन्दकिशोरशर्मसाहित्याचार्यकृत-

# कथाभट्टीया हिन्दीटीका ।

गद्यकाव्य के अप्रतिम विद्वान् , कादम्बरी कथा के जन्मदाता, ६०६–६४८ ई० में वर्तमान कन्नौज के महाराज श्रीहर्षवर्धन सम्राट् के राज पण्डित, परम-माननीय श्रीबाणभट्ट कवि अपने संरक्षक श्रीहर्षवर्धन सम्राट् की "हर्षचरित आख्यायिका" ( गद्यकाव्यभेद ) के प्रारम्भ में शिष्टाचारप्राप्त, मङ्गलकामना से विद्याप्रदानरसिक भगवान् श्रीशङ्कर को नमस्कार करता है—नम इति ।

उन्नत मस्तक पर विराजमान चन्द्रमारूपी चामर से अलंकृत तथा त्रिलोकी रूपी नगर के निर्माण में मूलस्तम्भ भगवान् शंकर को मैं नमस्कार करता हूँ । जो भगवान् शंकर त्रिलोकी के निर्माण में मूलस्तम्भ हैं वे ही इस ग्रन्थ के निर्माण के आधार हो सकते हैं अतः उनको नमस्कार करना कवि के औचित्य को प्रदर्शित करता है । कवि ने ग्रन्थ के "हरकण्ठ०" इस द्वितीय श्लोक में शंकरपत्नी पार्वती को नमस्कार किया है इस कारण प्रस्तुत श्लोक में शंकर की स्तुति करना ही कवि को अभिमत है तथापि इस श्लोक में ब्रह्मा और विष्णु की स्तुति भी प्रस्फुटित हो रही है । ब्रह्मा के पक्ष में मेदिनीकोश के कथन से चन्द्रपद सुवर्ण का भी बोधक है । उन्नत मस्तक में स्थित सुवर्णमय चामर ( केशों ) से शोभित अर्थात् हिर-ण्यकेश ब्रह्मा को नमस्कार है । "शम्भू ब्रह्मत्रिलोचनौ" इस अभिधानकोश से शम्भुपद ब्रह्मा का भी वाचक है । विष्णुपक्ष में "स्वयंभू शम्भुरादित्यः" इस विष्णुसहस्रनाम के अनुसार यहाँ शम्भुपद से विष्णु का अर्थ समझना चाहिये । "यस्याग्निरास्यं द्यौर्मूर्धा" इस वचन से स्वर्ग विष्णु का मस्तक है । उच्चस्थित द्युलोक में वर्तमान चन्द्रमा रूपी चामर से अलंकृत विष्णु को नमस्कार है । "त्रै-लोक्यनगरा०" इस पद का अर्थ तीनों पक्षों में समान ही है ॥ १ ॥

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् ।
कालकूटविषस्पर्शजातमूर्च्छागमामिव ॥ २ ॥

पूर्वस्मिन् श्लोके शम्भुस्तुतिं विधाय कविरपरेण श्लोकेन शम्भुप्रियामुमां स्तौति हरेत्यादिना । हरस्य शम्भोः कण्ठग्रहेण समाश्लेषेण य आनन्दो हर्षस्तेन मीलिते सङ्कुचितेऽक्षिणी नयने यस्याः सा ताम् । अत्र नेत्रनिमीलनवर्णनेन पार्वत्याः शृङ्गारानुभावो लज्जा व्यज्यते । कालमपि मृत्युमपि कूटयति दाहयतीति कालकूटः । कूट परिदाहे । कालकूटस्य कालकूटनामकस्य विषस्य गरलस्य स्पर्शनं संसर्गेण जात उत्पन्नो मूर्च्छाया विचित्तताया आगमः प्रारम्भो यस्याः सा ताम् । इवोत्प्रेक्षायाम् । "क्ष्वेडस्तु गरलं विषम्" इत्यमरः । "पुंसि क्लीबे च काकोलकालकूटहलाहलाः" इत्यादि गरलस्य नव भेदा विज्ञेया अमरकोशतः । कालकूटपदोपादानेनैव विषप्रतीतौ पुनस्तदुपादानं गोबलीवर्दन्यायेनेति विज्ञेयम् । एतादृशीमुमां पार्वतीं नमामि वन्दे । उमापदनिर्वचनं कालिदासेन 'उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम" इति निर्दिष्टं कुमारसम्भवे ( १स० २६ श्लो० ) । अत्र कविनान्तर्लीनावस्थायाः शक्तेः स्तुतिर्विहिता । तस्या एवानन्ददायित्वात् । तथाहि—शक्तिशक्तिमतोरभेद इति सिद्धान्तः । तस्याः शिवाभिन्नायाः शक्तेरन्तर्लीना बहिर्मुखी चेति द्वे अवस्थे । एतयोः प्रथमानन्दनिमग्ना, द्वितीया च संसारचक्रप्रवर्तिका । अत एव प्रथमास्तवनेनानन्दाधिगमः । द्वितीयास्तवनेन च संसारभ्रमणमिति ज्ञेयम् । पार्वती हि शम्भुकण्ठाश्लेषेण स्वयमानन्दनिमग्ना विगलितवेद्यान्तरा बभूवेति वस्तुस्थितिः । तत्र कविः शम्भुकण्ठस्थविषसम्पर्केण तस्या मूर्च्छात्वमुत्प्रेक्षते । अत्र प्रकृते आनन्दजनितनेत्रनिमीलने विषजनितमूर्च्छात्वोत्प्रेक्षणादुत्प्रेक्षालङ्कारः । "सम्भावनमथोत्प्रेक्षा प्रकृतस्य परात्मना" इति साहित्यदर्पणोक्तेः ॥ २ ॥

प्रथम श्लोक में शम्भु की स्तुति करके कवि अब शम्भुप्रिया पार्वती की स्तुति करता है—मैं शम्भु के कण्ठालिङ्गन के आनन्द से संमीलित नेत्रवाली एवं शम्भु के कण्ठस्थित विषसम्पर्क से ही मानो मूर्छित हुई पार्वती को नमस्कार करता हूँ ॥२॥

**नमः सर्वविदे तस्मै व्यासाय कविवेधसे ।**
**चक्रे पुण्यं सरस्वत्या यो वर्षमिव भारतम् ॥ ३ ॥**

"अस्यामन्यकवीनां च वृत्तम्" इत्याख्यायिकालक्षणोक्तमुत्कृष्टकविवर्णनमारभते नम इत्यादिना । सर्वं वेदशास्त्रादिकं वेत्तीति सर्वविदे सर्वज्ञाय । कवीनां वेधसे

विधात्रे । "अपारे काव्यसंसारे कविरेव प्रजापतिः । यथाऽस्मै रोचते विश्वं तथेदं परिवर्त्तते" इति कवेरपि विधातृत्वात् । महाभारतस्य च व्यासकृतित्वात्, महाभारतं चोपजीव्य सर्वकाव्यानां प्रवृत्तत्वाद् व्यासस्य कविवेधस्त्वमुपयुक्तम् । तस्मै प्रसिद्धाय व्यासाय कृष्णद्वैपायनाय वेदव्यासाय । नमो नतिरस्तु मे । अत्र नमः शब्दयोगात् "नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च" इत्यनेन चतुर्थी । यो वेदव्यासः पुण्यं पवित्रं 'यो गोशतं कनकश्रृङ्गमयं ददाति, विप्राय वेदविदुषे च बहुश्रुताय । पुण्यां च भारतकथां श्रृणुयाच्च नित्यं, तुल्यं फलं भवति तस्य च तस्य चैव, इत्यादिवचनेन महाभारतस्य पावनत्वम् । भारतं महाभारतम् । सरस्वत्या वाग्देव्या वर्षमिव वृष्टिमिव । "स्याद्वृष्ट्यां लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्" इत्यमरः । चक्रे विदधे । महाभारतस्य "यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्" इत्यादिनोत्कृष्टत्वं ज्ञेयम् । अथवा—यो व्यासो नद्या सरस्वत्या पुण्यं पवित्रं भारतं वर्षमिव भारतवर्षाख्यदेशमिव सरस्वत्या वाण्या पुण्यं पावनं भारतं महाभारतं विदधे । "उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । वर्षं तद्भारतं नाम भारती यत्र सन्ततिः" इत्युक्तो भारतवर्षाख्यो देशः । तत्र च सरस्वती नदी "सरस्वतीदृषद्वत्योर्देवनद्योः" इत्युक्ता । सरोऽस्त्यस्या इति सरस्वती । भरतः कश्चिद्राजा तन्नाम्नायं भारतवर्षाख्यो देशो विदितः । अत्र सरस्वतीभारतशब्दौ श्लिष्टौ । अत्रायमभिसन्धिः—व्यासं वन्दे । येन महाभारताख्यो महान् ग्रन्थो व्यरचि । जगति सप्तद्वीपाः—जम्बु—प्लक्ष—शाल्मल—कुश—क्रौञ्च—शाक—पुष्कराख्याः । जम्बुद्वीपे च नव वर्षाणि—कुरु—हिरण्मय—रम्यक—इलावृत्त—हरि—केतुमाल—भद्राश्व—किन्नर—भारताख्यानि । अत्र महाभारतस्य वाग्देवताप्रवाहरूपोत्प्रेक्षणादुत्प्रेक्षा प्रथमपक्षे । अन्यत्र तु महाभारतस्य भारतवर्षेण सह साधर्म्यकथनादुपमा । अनुष्टुप्छन्दः ॥ ३ ॥

जिस प्रकार सर्वज्ञ ब्रह्माने सरस्वती नदी से पुनीत भारवर्ष का निर्माण किया उसी प्रकार सर्वज्ञ वेदव्यासने सरस्वती की वर्षा के समान पवित्र महाभारत की रचना की ऐसे उत्कृष्ट कवि वेदव्यास को नमस्कार है ॥ ३ ॥

**प्रायः कुकवयो लोके रागाधिष्ठितदृष्टयः ।**
**कोकिला इव जायन्ते वाचालाः कामकारिणः ॥ ४ ॥**

कुकविनिन्दामारभते प्राय इत्यादिना । लोके जगति रागेऽभिनिवेशेऽधिष्ठिता

निबद्धा दृष्टिर्बुद्धिर्येषां ते तथोक्ताः कामेन स्वेच्छया न त्वालङ्कारिकमार्गेण कुर्वन्तीति ये ते। स्वेच्छाचारिण इति यावत्। कोकिला इव परभृता इव वाचाला मुखराः प्रायो जायन्ते भवन्ति। कोकिलपक्षे—रागे लौहित्येऽधिष्ठिता व्याप्ता दृष्टिश्चक्षुर्येषां ते तथा कामकारिणो मदनाविर्भावकाः। कामोद्दीपकत्वात्कोकिलस्य। अवाचाला मधुरभाषिणा जायन्ते। कुकन्ति गृह्णन्ति चेतांसि सतामिति कुकाः कुकाश्च ते वयश्चेति कुकवयो मयूरपारावतादयः पक्षिणोऽप्येवम्। सङ्केतव्याख्यायां शङ्करस्तु पद्यमिदं महाभारतग्रन्थप्रशंसापरं व्याचष्टे स्म। यथा—महाभारतं नामैवं सुभगम्। येन कुकवयोऽपि कोकिला इवावाचाला मधुरभाषिणो जायन्ते। किं पुनः सत्कवयः। अत्रोपमालङ्कारः। कुकविरुपमेयम्, कोकिलश्चोपमानम्, इवशब्दो वाचकः, वाचालावाचालौ शब्दौ साधारणधर्मं निवेशिताविति शाब्दीपूर्णोपमाशरीरम्॥ ४॥

ग्रन्थकार कुकवियों की निन्दा करता है–संसार में आग्रहशील तथा स्वेच्छाचारी कुकविगण कोकिल के समान वाचाल होरहे हैं। यहाँ कोकिल की उपमा में केवल शब्दों का ही साम्य है अर्थ का नही। कोकिलपक्ष में भी रागाधिष्ठित दृष्टि, कामकारी, तथा अवाचाल पदों का अर्थ संगत होजाता है। कोकिल के नेत्रराग (लौहित्य) से व्याप्त होते हैं। और उसका मधुरभाषण कामोत्तेजक होता है॥४॥

**सन्ति श्वान इवासङ्ख्या जातिभाजो गृहे गृहे।**
**उत्पादका न बहवः कवयः शरभा इव॥ ५॥**

कुकवीन्निन्दति सन्तीत्यादिना। गृहे गृहे प्रतिगृहम्। जाति स्वभावोक्ति न तु वक्रोक्तिम्। अथवा जातिर्जन्म भजन्तीति तादृशाः केवलमुत्पत्तिभाजो न त्वभिनवरचनया किमपि जगत उपकर्तुं क्षमाः। "सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते। यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना" इति वक्रोक्तिप्रशंसा। वक्रोक्तिजीविताख्येऽलङ्कारग्रन्थे प्रतिपादितस्वरूपा वक्रोक्तिरन्या, साहित्यदर्पणकारादिभिर्निर्दिष्टा चैषान्येति बोध्यम्। कुकवयः श्वान इव सारमेया इवासंख्या बहवः सन्ति। कुक्कुरा अपि जातिभाजः स्वजातिसमवेतामेध्यभक्षणादिकर्तारो बहवः सन्ति। असङ्ख्याः सङ्ग्रामशून्याश्च। उत्पादका अभिनवप्रबन्धनिर्मातारः शरभा इवाष्टापदपशुविशेषा इव बहवः कवयो न सन्ति। शरभा अपि

उदूर्ध्वं पादा येषां ते तथोक्ताः । शरभा हि गर्जतो मेघान् विलोक्य प्रतिस्पर्ध-योर्ध्वपादा जायन्ते । शरभो हि सिंहमपि हिनस्ति । यथा महाभारते "अष्टपादूर्ध्वनयनः शरभो वनगोचरः । स सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशनम्" इति ( वनपर्व ११९ अ० १३ श्लो० ) । अत्र कुकवयः श्वान इवेत्युपमैका, शरभा इव सत्कवयश्चेत्यपरोपमा । अनयोर्द्वयोरन्योन्यनैरपेक्ष्येण स्थितेश्च संसृष्टिरलङ्कारः ॥ ५ ॥

प्रत्येक स्थान में कुक्कुरों के समान असंख्य जन्मना कवि प्राप्त होते हैं । किन्तु शरभों के समान नवीन काव्य के उत्पादक कवि अधिक संख्या में प्राप्त नहीं होते । शरभ पशु भी मेघगर्जना को सुनकर ऊर्ध्वपाद होकर उछलता है । अर्थात् नवीन काव्यनिर्माता कवि अधिक नहीं हैं ॥ ५ ॥

**अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः ।**
**अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥ ६ ॥**

पुनरपि कुकविनिन्दामाहान्येत्यादिना । अन्येषां कवीनां ये वर्णा अक्षर—विन्यासास्तेषां परावृत्त्या विनिमयेन परेषां वर्णानपहाय स्वकल्पितवर्णविन्यासेनेति यावत् । बन्धानां गौडीवैदर्भ्यादीनां चिह्नानां श्रीलक्ष्मीप्रभृतीनां निगूहनैर्गोपनैः । अन्यकविनामादिनिःसारणैरिति यावत् । अनाख्यातोऽपि परैरनुक्तोऽपि कविः सतां सत्पुरुषाणां मध्ये चौरः परकाव्यार्थलुण्टाक इति विभाव्यते विज्ञायते । चौरपक्षे तु अन्योऽस्वाभाविकन्यासजनितो यो वर्णः पाण्डिमादि तस्य परावृत्त्या परिवर्तनेन । बन्धस्य निगडस्य चिह्नं तस्य निगूहनैर्गोपनैः । न ना अना कापुरुषः । अख्यातोऽपि अनुक्तोऽपि ज्ञायत एव । अत्र कवौ चौरसमारोपे रूपकालङ्कारः । स च श्लिष्टविशेषणपरिपुष्टः श्लेषानुप्राणितः । प्रायः कुकवयोऽन्येषां काव्यार्थान् विविच्य तेभ्यो वर्णान् बन्धविशेषांश्चापहाय तान् स्वकाव्यत्वेन प्रख्यापयन्ति ते चौराः कवयः ॥ ६ ॥

प्रायः आजकल के कवि अक्षरों का परिवर्तन करके दूसरों की कविता को अपनी कविता कह देते हैं । किन्तु उत्कृष्ट कवियों के मध्यमें वे कवि बिना कहे ही चौरसम माने जाते हैं । चौर भी आकृति के परिवर्तन से बन्धन ( बेड़ियों ) के गोपन से बिना कहे ही कापुरुष ( भीरु ) जाना जाता है ॥ ६ ॥

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् ।
उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरः ॥ ७ ॥

देशभेदेन कवीनां रुचिमाह श्लेषेत्यादिना । उदीच्यासु उत्तरस्मिन् देशे भवा उदीच्याः शरावत्या नद्याः पश्चिमोत्तरदेशवासिन इत्यर्थः, तेषु श्लेषप्रायं श्लेषप्राचुर्यम् । "श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष उच्यते" इति श्लेषालङ्कारः । स च सभङ्गाभङ्गतदुभयरूपतया त्रिविधः । भवति । प्रतीच्येषु पश्चिमदेशीयेषु जनेष्वर्थमात्रकमर्थगाम्भीर्यं भवति । अर्थोऽपि त्रिविधो वाच्यलक्ष्यव्यङ्ग्यतया । दाक्षिणात्येषु दक्षिणदिग्भवेषु आ विन्ध्याचलात्, महासागरं यावदवस्थितेषु । उत्प्रेक्षालङ्कारबाहुल्यं दृश्यते । "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इत्युत्प्रेक्षालक्षणम् । गौडेषु गौडदेशोत्पन्नेषु जनेषु वङ्गदेशादारभ्योत्कलदेशसीमावस्थितां सुवर्णरेखां नदीं यावत् विस्तृतजनपदेषु । अक्षराणां डम्बरो वर्णबाहुल्यम् । अत एव रीतिषु गौडीया नाम रीतिरक्षराडम्बरपूर्णोच्यते । "ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः । समासबहुला गौडी" इत्यभियुक्तोक्तेः । न हि सर्वमिदमेकत्र दृश्यते । यत्र सर्वमिदं सम्मिलितं भवेत्तदुत्तमं काव्येषु भवेदाम । मम वाचि सर्वे गुणाः सम्मिलिता भविष्यन्तीति कवेर्देशाचारवर्णनेनाकूतं ज्ञायते ॥ ७ ॥

देशभेद से कवियों की रुचि बतलाई जाती है—विन्ध्याचल से उत्तर देश के निवासी कवि श्लेषालङ्कार के प्रेमी होते हैं । पश्चिम के निवासी अर्थगाम्भीर्य को पसन्द करते हैं । दाक्षिणात्य कवि उत्प्रेक्षाप्रिय हैं । गौड देश के निवासी ( पूर्व-दिशा में स्थित वङ्गीयकवि ) अक्षरों के आडम्बर ( अनुप्रास ) के प्रेमी हैं । यहाँ कवि का यह अभिप्राय है कि सब बातें एक स्थान में प्राप्त नहीं होतीं । किन्तु मेरी वाणी में उक्त सब बातें सम्मिलित रहती हैं ॥ ७ ॥

**नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।**
**विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥ ८ ॥**

**नवेति—नवोऽभिनवोऽर्थः प्रबन्धः । प्रबन्धार्थो द्विविधः श्रूयते—अयोनिरन्यच्छाययोनिर्वा । एतयोः प्रथमोऽयोनिरूपोऽर्थः कविबुद्धौ दुष्करं मन्यते । अग्राम्या ग्राम्यदोषरहिता । चमत्कृततेति यावत् । जातिः, स्वभावोक्तिः । अक्लिष्टः = दुर्बोधरहितः, श्लेषः = श्लेषालङ्कारः । स्फुटो विभावादिभिर्व्यक्तीकृतः रसः शृङ्गा-**

रादिः । विकट उदारतालक्षणयुक्तः । "विकटत्वमुदारता" इति वामनः काव्यालङ्कारे । अक्षराणां वर्णानां बन्धः संयोजनम् । एतत्कृत्स्नं सर्वम् । एकत्रैकस्मिन् प्रबन्धे दुर्लभमास्ते । एते सर्वे गुणा येषां कवीनां प्रबन्धे जायन्ते ते विरला एव ॥ ८ ॥

नवीनकल्पना, ग्राम्यदोष से शून्य स्वभावोक्ति, सुबोध श्लेष, प्रस्फुट रस ओजस्वी निर्माण, इन सब गुणों का एक स्थान में सक्षम होना अतिदुर्लभ है । एक प्रबन्ध में सब का मिश्रण करनेवाले कवि विरले ही हैं ॥ ८ ॥

**किं कवेस्तस्य काव्येन सर्ववृत्तान्तगामिनी ।**
**कथेव भारती यस्य न व्याप्नोति जगत्त्रयम् ॥ ९ ॥**

किमिति—तस्य कवेर्वर्णकस्य काव्येन प्रबन्धेन किम् । न किमपि प्रयोजनम् । यस्य सर्वाणि समानि यानि वृत्तानि वर्णमात्रागणसमार्धसमविषमरूपाणि । तेषामन्तं पूर्णतां गच्छतीति प्राप्नोतीति तादृशी भारती वाणी । भारती कथेव महाभारतकथेव जगतां त्रयं जगत्त्रयं भूर्भुवः स्वः इति त्रिलोकीं न व्याप्नोति । यस्य कवेर्वाणी जगत्त्रये न प्रशस्यते तस्य कवेः काव्येन किम् । महाभारतपक्षे—सर्वेषां सत्पुरुषाणां वृत्तान्तस्य चरितस्य गामिनी बोधिका । सर्ववृत्तान्तगामिनी=सर्वसत्पुरुषचरितबोधिका । जगत्त्रयं व्याप्नोति महाभारतीया कथा । यथोक्तम्—"नारदोऽश्रावयद्देवान्, असितो देवलः पितॄन् । गन्धर्वयक्षरक्षांसि श्रावयमास वै शुकः" इति ॥ ९ ॥

सम्पूर्ण आदर्श पुरुषों के चरित्रों से व्याप्त महाभारत की कथा के समान जो काव्य तीनों लोकों में व्याप्त नहीं है वह काव्य व्यर्थ है । और उसके निर्माता कवि सुकवि नहीं हैं ॥ ९ ॥

**उच्छ्वासान्तेऽप्यखिन्नास्ते येषां वक्त्रे सरस्वती ।**
**कथमाख्यायिकाकारा न ते वन्द्याः कवीश्वराः ॥ १० ॥**

प्राचां कवीनां काव्यभेदान्स्तुवंस्तान्नमस्कुरुते उच्छ्वासेत्यादिना । येषां कवीनां वक्त्रे मुखे सरस्वती वाणी । उच्छ्वासान्तेऽपि कथांशपरिच्छेदकग्रन्थैकभागान्तेऽपि । अखिन्ना खेदरहिता । अपरोच्छ्वासनिर्माणे बद्धपरिकरा । आस्ते वर्तते । आस उपवेशने । ते आख्यायिकाकारा आख्यायिकाकाव्यकर्तारः कवी-

श्वरा महाकवयः कथं न वन्द्या नमस्कारार्हाः। अपि तु वन्द्या एव। अयं भावः- मानवा अधिकभाषणेनोच्छ्वसन्ति श्राम्यन्तीति भावः। किन्तु येषां कवीनामुच्छ्वासान्तेऽपि सरस्वती न खिद्यति कथं न ते वन्द्या वन्द्या एव। आख्यायिका-पक्षे—वक्त्रं नाम छन्दः। उच्छ्वासा आख्यायिकायां बहवो जायन्ते कथांशसमाप्तिसूचकाः। आख्यायिकाः कुर्वन्तीत्याख्यायिकाकाराः। आख्यायिकालक्षणं च साहित्यदर्पणे षष्ठपरिच्छेदेऽभिहितम्—

कथा—"कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्"। यथा कादम्बर्यादिः।

आख्यायिका—"आख्यायिका कथावत्स्यात्कवेर्वंशानुकीर्तनम्।
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित् क्वचित्॥
कथांशानां व्यवच्छेद आश्वास इति कथ्यते।
आर्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्॥
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्"।

अथवा—कवयश्च त ईश्वराश्च ब्रह्मविष्णुशङ्कराश्च ते कवीश्वरा इत्यर्थस्वीकारे तु उच्छ्वासान्तेऽपि कल्पान्तेऽपि खेदरहिताः। तथा येषां मुखे वाग्देवी वर्त्तते। तथा आख्यायिकाभिराख्यानैरेवाकार आकृतिर्येषां ते कथं न वन्द्याः। देवा हि शास्त्रैरेव विज्ञायन्ते। न तु ते प्रत्यक्षलक्ष्या इति भावः॥ १०॥

आख्यायिका ( गद्यकाव्य ) में अनेक उच्छ्वास बनाने पर भी जिन कवीश्वरों की वाणी श्रान्त नहीं होती वे कवि अवश्य वन्दनीय हैं॥ १०॥

**कवीनामगलद्दर्पो नूनं वासवदत्तया।**
**शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम्॥ ११॥**

**कवीनामिति**—कर्णगोचरं श्रुतिविषयं गतया प्राप्तया। वासवदत्तया सुबन्धुकविविरचितवासवदत्ताख्यकथाकाव्येन। कवीनां निखिलानां काव्यकर्तॄणाम्। शक्त्या शक्तिनामकायुधेन पाण्डुपुत्राणां युधिष्ठिरादीनामिव। दर्पः कवित्वमदोऽगलन्निरस्तः। वासवदत्तानुरूपिणीं कथां निर्मातुमक्षमाः कवयो लज्जिता अभवन्निति भावः। शक्तिनामकायुधपक्षे तु यथा वासवेनेन्द्रेण दत्तया वितीर्णया तथा

कर्णगोचरं राधेयनिकटं गतया शक्त्या आयुधेन पाण्डुपुत्राणां युधिष्ठिरादीनां दर्पः शूरत्वाभिमानोऽगलद्विनष्टः । अक्षयकवचग्रहणावसरे प्रीतेनेन्द्रेण हि कर्णाय वैरारातिघ्नी गदा प्रदत्तेति महाभारतीया कथात्रानुसन्धेया । यथा—

"ददौ शक्तिं सुरपतिर्वाक्यं चेदमुवाच ह ।
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ॥
यमेकं जेतुमिच्छेथाः सोऽनया न भविष्यति" ।

( आदिपर्व० ३ अ० २९-३० ) अत्रोपमालङ्कारः ॥ ११ ॥

इन्द्र के द्वारा कर्ण को प्राप्त हुई शक्ति ( आयुध विशेष ) से जिस प्रकार पाण्डवों का गर्व नष्ट हुआ, उसी प्रकार सुबन्धुकवि कृत वासवदत्ता ( गद्यकाव्य—कथा ) के सुनने से सब कवियों का गर्व गिरगया ॥ ११ ॥

**पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ।**
**भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥ १२ ॥**

पदेति—पदानां सुप्तिङन्तानां बन्धो रचना तेनोज्ज्वलो दीप्तः । हारी मनोरमः । कृता विहिता वर्णानामक्षराणां क्रमेणालङ्कारिकमार्गेण स्थितिरवस्थानं यस्मिन् सः । भट्टारहरिचन्द्रस्य हरिचन्द्राख्यजैनमहाकवेः । गद्यबन्धो नृप इवाचरतीति नृपायते राजायते । सर्वोत्तम इत्यर्थः । अयं हरिचन्द्रो धर्मशर्माभ्युदयकर्ता वान्य इति न निश्चितम् । नृपपक्षे तु पदबन्धोज्ज्वलः स्वमण्डलावष्टम्भः । हारी हारयुतः । कृता वर्णानां द्विजादीनां क्रमेणोच्चावचतया स्थितिर्येन सः । भट्टारकपदमुत्कर्षप्रकाशकं महानुभावादिवत् । प्राचीनकालानरेशेषु राज्ञां महतां च कृते भट्टारकपदं प्रयुज्यते स्म । यथा—"परमभट्टारकमहाराजाधिराजश्रीहर्षः" इत्यादि विज्ञेयम् । "पादा भट्टारको देवः प्रयोज्याः पूज्यनामतः" इति नाममाला । अत्रोपमालङ्कारः ॥ १२ ॥

ललित पदों के विन्यास से उज्ज्वल तथा आलङ्कारिकशैली के अनुसार मधुर व ओजस्वी वर्णों से विभूषित, भट्टारक हरिचन्द्र जैन कवि का सुन्दर गद्यकाव्य राजा के समान सर्वश्रेष्ठ है । राजा भी ब्राह्मण आदि चारों वर्णों की व्यवस्था करता है और अपने मण्डल के उत्तम प्रबन्ध से भूषित रहता है ॥ १२ ॥

**अविनाशिनमग्राम्यमकरोत्सातवाहनः ।**
**विशुद्धजातिभिः कोशं रत्नैरिव सुभाषितैः ॥ १३ ॥**

**अविनाशिनमित्यादि**—सातवाहनो हालकविः । आन्ध्रभृत्यवंशीयो राजेति यावत् । अविनाशिनमनपायम् । अग्राम्यं वैदग्ध्ययुक्तम् । विशुद्धा निर्दोषा जातिरभिनवकाव्यार्थानामुत्पत्तिः स्वभावोक्तिरलङ्कारो वा येषु तानि तैः । विशुद्धजातिभिर्निर्दोषालङ्कारैः । सुभाषितैः सुभाषितपद्यैः सूक्तिभिरिति यावत् । "पुराणेष्वितिहासेषु तथा रामायणादिषु । वचनं सारभूतं यत्तत्सुभाषितमुच्यते" इति सुभाषितलक्षणम् । रत्नैर्मणिभिरिव कोशं कोशकाव्यं गाथासप्तशतीरूपं प्राकृतकाव्यमकरोत् कृतवान् । कोशकाव्यलक्षणं चोक्तं साहित्यदर्पणे "कोशः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः" इति । कोशं धनागारं चाकरोत् । अत्र कोशपक्षे–अविनाशिनमक्षयम् । अग्राम्यमग्रामभवं नागरिकमिति यावत् । विशुद्धा निर्मला जातिर्गोमेदकत्वादिरत्नभेदो येषां तैः । रत्नैरिव कोशं चक्रे । यथा राजा रत्नैः कोशमक्षयं कुरुते तथा सातवाहनो राजा सुभाषितैः पद्यैः गाथासप्तशतीनामकं कोशकाव्यं चकारेत्युपमालङ्कारः ॥ १३ ॥

जिस प्रकार राजा सातवाहन (शालिवाहन) ने विशुद्ध जाति के रत्नों से अपने खजाने को अक्षय बनाया उसी प्रकार उसने सुन्दर अलङ्कारों से विभूषित सूक्तियों से चित्ताकर्षक कोशकाव्य ( गाथासप्तशती ) का निर्माण किया ॥ १३ ॥

**कीर्तिः प्रवरसेनस्य प्रयाता कुमुदोज्ज्वला ।**
**सागरस्य परं पारं कपिसेनेव सेतुना ॥ १४ ॥**

**कीर्तिरिति**—प्रवरसेनस्य सेतुबन्धकाव्यकर्तुर्महाराजस्य । काश्मीराधिपप्रवरसेनमहाराजेन रावणवधापरपर्यायं सेतुबन्धकाव्यं निर्मितम् । तच्च महाराष्ट्रीप्राकृतभाषायां वर्त्तते । तथा च दण्डिनोक्तं—

"महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः ।
सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम्" ।

( काव्यादर्श १ । ३४ ) ।

कुमुदवत्कैरवदुज्ज्वला निर्मला कीर्तिर्यशः । सेतुना सेतुबन्धकाव्येन । कपिसेना वानरवाहिनीव । सागरस्य समुद्रस्य परं पारं देशान्तरं प्रयाता गता । प्रसिद्धेति

यावत्। कपिसेनापक्षे—प्रवे प्लुते रस आनन्दो येषां तेषां वानराणामिनः स्वामी सुग्रीवः। प्रवरोत्कृष्टा सेना यस्य तादृशस्य सुग्रीवस्य। कुमुदेन वानरविशेषेणो-ज्ज्वला प्रदीप्ता। यथा च रामायणे—

"शरभः कुमुदो वह्निर्वानरो रम्भ एव च।
एते चान्ये च बहवो वानराः कामरूपिणः"॥

किष्किन्धाकाण्डे (३९ सर्गे ३७–३८ श्लो०)। कपिसेना वानरवाहिनी सेतुनेव जलरचितेनेव। यथोक्तं रामायणे—

"तानि कोटिसहस्राणि वानराणां महौजसाम्।
बध्नतः सागरे सेतुं जग्मुः पारं महोदधेः"॥

युद्ध का० ( २२ सर्गे ७४–७५ श्लो० )। सागरस्य दक्षिणोदधेः परं पारं प्रयाता प्राप्ता। लङ्कामिति शेषः। उपमालङ्कारः॥ १४॥

काश्मीर के महाराज प्रवरसेन की उज्ज्वल कीर्ति वानरसेना के समान सेतु-बन्ध महाकाव्य ( रावणवध ) से सागर के पार तक पहुँच गई। कुमुदनामक वानर से उज्ज्वल सुग्रीव की वानरसेनाने भी सेतुद्वारा दक्षिण समुद्र को पार कर लङ्का में आक्रमण किया था॥ १४॥

**सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।**
**सपताकैर्यशो लेभे भासो देवकुलैरिव॥ १५॥**

**सूत्रधारेति**—भासस्त्रयोदशनाटककर्ता कविः। सूत्रधारेण नाटकाध्यक्षेण कृतो विहित आरम्भः प्रारम्भो येषां तानि तैः। नाटकाध्यक्षप्रवर्तितैरित्यर्थः। सूत्र-धारो हि पूर्वरङ्गं विधाय विनिवर्त्तते। "पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते" इति साहित्यदर्पणे। तथा बह्वयो भूमिकाः पात्राणि येषु तानि। पताकया सहितानि तैः सपताकैः। अन्यस्मिन्नर्थे चिन्तिते सत्यर्थान्तरोपगमः पताका। पताकालक्षणं साहित्यदर्पणे—

"यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकं हि तत्"॥ ( ६।४५ )

इदं पताकास्थानकं चतुर्विधमिति ज्ञेयम्। एतादृशैर्नाटकैः दृश्यकाव्यैः। देव-कुलैरिव देवानां कुलानि तैर्देवमन्दिरैरिव यशः कीर्तिं लेभे प्राप। देवमन्दिरपक्षे—

सूत्रधारेण शिल्पिना कृतो विहित प्रारम्भो येषां तानि तैः । बहुभूमिकैर्बहुपृथ्वीकैर्विशालैः सावकाशैरिति यावत् । पताका वैजयन्ती ताभिः सहितैः । देवकुलैरिव यशो लेभे । भासमहाकविना रचितानि त्रयोदशनाटकानि । तानि यथा–प्रतिमानाटकम्, अभिषेकनाटकम् ( इदं द्वयं रामायणाधारेण रचितम् ) । ३–मध्यमव्यायोगः, ४–दूतघटोत्कचम्, ५–कर्णभारः, ६–ऊरुभङ्गः, ७–पञ्चरात्रम्, ८–दूतवाक्यव्यायोगः, ( इमानि षण्नाटकानि महाभारतमुपजीव्य लिखितानि ), ९–बालचरितम् ( हरिवंशाधारेण कृतम् ), १०–अविमारकम्, ११–प्रतिज्ञायौन्धरायणम्, १२–स्वप्नवासवदत्ता, ( एतानि गुणाढ्यकृतबृहत्कथामुपजीव्य कृतानि ) । १३–चारुदत्तम् ( कल्पितवृत्ताधारेण कृतम् ) । अत्रोपमालङ्कारः ॥१५॥

त्रयोदश नाटक कर्ता भास कविने सूत्रधार के प्रयोग से गुण तथा अनेक पात्र विभूषित, एवं नाटकोक्त चारों पताकाओं से सुसज्जित अपने नाटकों से देवमन्दिरों के समान कीर्ति प्राप्त की । उत्तम शिल्पी द्वारा निर्मित, विशाल काय तथा अनेक पताकाओं से विभूषित देवमन्दिरों से कीर्ति व्याप्त रहती है ॥ १५ ॥

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥ १६ ॥

**निर्गतास्विति**––निर्गतासूच्चरितमात्रासु । अर्थानुसन्धानं विनापि केवलं शब्दानुसन्धानमात्रेणेति भावः । मधुरा माधुर्यादिगुणयुक्ताः शृङ्गाराभिव्यञ्जकवर्णाः सान्द्राः सरसाश्चेति तासु । मञ्जरीष्विव–वल्लरीष्विव । अभिनवाङ्कुरेष्विति यावत् । कालिदासस्य महाकवेः–रघुवंशादिकाव्यकर्तुः । सूक्तिषु—अभिज्ञानशाकुन्तलादिकाव्येषु । कस्य सहृदयभिन्नस्यापि प्रीतिः काव्यास्वादजन्यानन्दो न जायते । कालिदासकाव्यश्रवणेन सर्वेषामानन्दो जायत इति भावः । मञ्जरीपक्षे निर्गतासूद्भिन्नासु । मधुरा मकरन्दवाहिन्यः । मधु विद्यते यासु ताः मधुरा मधुराश्च ताः सान्द्राः सघनाश्च तासु मञ्जरीषु कस्य पुरुषस्य प्रीतिरानन्दो न जायते । जायत एवेति भावः । उपमालङ्कारः ॥ १६ ॥

माधुर्यपरिपूर्ण नवीन मञ्जरी के उद्गमके समान कालिदास की सूक्तिके निर्गम से किसका चित्त आकृष्ट नहीं होता ॥ १६ ॥

समुद्दीपितकन्दर्पा कृतगौरीप्रसाधना ।
हरलीलेव नो कस्य विस्मयाय बृहत्कथा ॥ १७ ॥

समुद्दीपितेति—समुद्दीपितो वृद्धिं नीतः कन्दर्पो नरवाहनदत्तो यस्यां सा । यद्वा समुत् सहर्षा तथा दीपित कन्दर्पा प्रकाशितनरवाहनदत्ता । नारवाहनदत्तो हि कामदेवावतारो वत्सराजवासवदत्तयोः पुत्रः । यथोक्तं कथासरित्सागरे—

"गगनादुच्चचारैव काले तस्मिन्सरस्वती ।
कामदेवावतारोऽयं राजञ्जातस्तवात्मजः ।
नरवाहनदत्तं च जानीह्येनमिहाख्यया" ॥

( लम्बके, ३ तरङ्गे ७२-७३ श्लो० )

अथवा दीपित उद्दीपितः कन्दर्पः कामो यया सा । बृहत्कथायां हि कामजनानां बहूनां वृत्तं वर्णितम् । तेषां वृत्तान्तश्रवणेन कामोद्बोधो जायते । कृतं विहितं गौर्याः पार्वत्याः प्रसाधनमाराधनं यस्यां सा । नरवाहनदत्तेन पार्वत्या आराधना विहितेति तत्र वर्णितम् । अथवा कृतं गौर्या विद्याभेदस्याराधनं यस्यां सा । यद्वा गौरीं प्राति पूरयति गौरीप्रः । गौरीप्रः साधनं परिकरबन्धो यया प्रस्तावो यस्यां सा । गौरीप्रेरितेन हि हरेण तथा तस्यां परिकरबन्धः कृतो यथा सातीव पिप्रिये । इयं कथा बृहत्कथायां वर्त्तते । एतादृशी बृहत्कथा कविगुणाढ्यकृता पैशाचीप्राकृतभाषामयी । हरलीलेव शङ्करलीलेव कस्य पुरुषस्य विस्मयायाश्चर्याय नास्ते । बृहत्कथां दृष्ट्वा सर्वेऽपि विस्मयन्ते । हरलीलापक्षे—समुद्दीपितः प्रज्वालितः कन्दर्पोऽनङ्गो यया सा अथवा कृतं गौर्या पार्वत्या कर्त्र्या प्रसाधनमाराधनं यस्याः सा । अथवा कृतं गौर्याः प्रसाधनं यस्यां सा । कामप्रेरितेन हरेण पार्वती प्रसाधितेति भावः । एतादृशी हरलीला कस्य विस्मयाय नास्ते । क्व कामं प्रति द्वेषः, क्व च कान्ताप्रसाधनमिति विस्मयास्पदम् । बृहत्कथाकर्ता गुणाढ्यः शालिवाहनराजपण्डितो बभूव । बृहत्कथा लक्षश्लोकमयी साम्प्रतं नोपलभ्यते । केवलं तदाधारेणनिर्मिते कथासरित्सागरबृहत्कथामञ्जर्यावेव समुपलभ्येते । उपमालङ्कारः ॥१७॥

कामवासना को बढानेवाली तथा नरवाहनदत्त कृत पार्वतीपरिचर्या की प्रतिपादक गुणाढ्य कवि की बृहत्कथा शङ्कर की लीला के समान किसको आश्चर्य में

नही डालती । भगवान् शङ्कर की लीला भी विचित्र है कि एक तरफ तो काम को जलाती है और दूसरी तरफ पार्वती को प्रसन्न करती है ॥ १७ ॥

**आढ्यराजकृतोत्साहैर्हृदयस्थैः स्मृतैरपि ।**
**जिह्वान्तःकृष्यमाणेव न कवित्वे प्रवर्त्तते ॥ १८ ॥**

आढ्येति—हृदयस्थैर्मनसि संस्काररूपेणावस्थितैः । स्मृतैरपि = चिन्तितैरपि । आढ्यराजेन—एतन्नामकेन केनचित्कविना कृतैर्निर्मितैरुत्साहैरुत्साहनामकैर्नृत्यतालप्रतिपादकैः काव्यैः । उत्साहो नृत्ये तालविशेषः । उदाहरणगीत्याधारभूतपदोपचारात्काव्यमप्युत्साह इति केचित् । अन्ये तु "यत्र पूर्वं श्लोकेनार्थ उपक्षिप्यते, पश्चात् स एव गद्येन वितन्यते, मध्ये वृत्तनिबन्धश्च भवति, स परिसमाप्तार्थ उत्साह उच्यते" इति । अन्तःकृष्णमाणेव प्रत्यङ्नायमानेव । जिह्वा रसना कवित्वे काव्यं कर्तुं न प्रवर्त्तते नोद्युङ्क्ते । आढ्यराजकाव्यमप्युत्तममिति भावः । उत्प्रेक्षालङ्कारः ॥ १८ ॥

आढ्यराज से निर्मित नर्तन ग्रन्थ के स्मरण से ही जिह्वा कविता करने में प्रवृत्त नहीं होती । वापिस ही अन्दर जाती है । क्योंकि ऐसे २ उत्तम ग्रन्थों के सत्ता में इस मेरी कविता का कौन आदर करेगा ॥ १८ ॥

**तथापि नृपतेर्भक्त्याभीतो निर्वहणाकुलः ।**
**करोम्याख्यायिकाम्भोधौ जिह्वाप्लवनचापलम् ॥ १९ ॥**

तथापीति—तथापि=जिह्वाया अन्तःकृष्णमाणत्वेऽपि । प्राचीनेषु बहुषु काव्येषु सत्स्वपीति वा । निर्वहणे कथासमाप्तौ । आकुलो व्याकुलः । नृपतेर्हर्षवर्धनमहाराजस्य । भक्त्या प्रेम्णा । अभि-इतः = अभीतो व्याप्तः । आख्यायिका= एतन्नामककाव्यविशेष एवाम्भोधिः सागरः । तस्याम् । जिह्वाया रसनायाः । प्लवनं = सन्तरणमेव चापलं चञ्चलतां करोमि विदधे । अम्भोधिपक्षे—नृपते राज्ञा भक्त्या प्रेम्णा । अभीतो भयरहितः । निर्वहणे सन्तारणे पारप्राप्तौ । आकुलो व्याकुलः । जिह्वा समुद्रेऽकालवातः । तस्यां सत्यां प्लवने सन्तरणे चापलं व्यापारं करोत्यन्योऽपि मनुष्य इति भावः । आख्यायिकाकाव्यलक्षणं तु पूर्वमुक्तम् । आख्यायिकैवाम्भोधिरित्यत्र रूपकालङ्कारः ॥ १९ ॥

उक्त उत्तम २ काव्यों की सत्ता होनेपर भी राजा ( हर्ष ) की भक्तिसे व्याप्त तथा कथाकी समाप्तिमें सन्दिग्ध मैं ( बाणभट्ट ) आख्यायिका रूपी समुद्रमें अपनी जिह्वाको अग्रसर करताहूं । समुद्रमें जिह्वा ( अकालवायु ) होनेपर पुरुष तैरने में सन्दिग्ध होता हुवा भी चपलतासे शीघ्र अग्रसर होता है ॥ १९ ॥

सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः ।
शब्दैराख्यायिका भाति शय्येव प्रतिपादकैः ॥ २० ॥

सुखेति—सुखेनानायासेन यः प्रबोधः प्रकृष्टं बोधनं प्रबोधश्चतुर्वर्गफलप्राप्ति-जनकव्युत्पत्तिः । तेन ललिता—मधुरा । काव्याच्चतुर्वर्गफलप्राप्तिरनायासेनैव जायतेऽत उक्तं सुखप्रबोधललितेति । यथोक्तम्—"चतुर्वर्गफलप्राप्तिः सुखादल्प-धियामपि । काव्यादेव यतस्तेन तत्स्वरूपं वितन्यते" ( साहित्य० ) । तथा सुष्ठु वर्णानामक्षराणां घटना योजना यस्यां सा । मधुराक्षरयुक्तेति यावत् । प्रतिपादय-न्तीति तैः प्रतिपादकैरिष्टार्थप्रतिपादकैः । उज्ज्वलैरुज्ज्वलरसप्रतिपादकैः प्रदीप्तै-रिति वा । शब्दैर्वाचकैः । शय्येव पल्यङ्क इव । आख्यायिका=काव्यभेदः । भाति शोभते । सुन्दरवर्णविन्यासा झटित्यर्थावबोधिका प्रसादगुणवती मनोरमैः शब्दैः सनाथाख्यायिका सर्वेषां मनो हरते । शय्यापक्षे—सुखं यः प्रबोधो जाग-रणं तेन ललिता मनोरमा । सुवर्णस्य हेम्नो घटनं योजनं यस्यां सा । उज्ज्वलैः प्रदीप्तैः । प्रतिपादकैः शय्यायाश्चतुर्भिश्चरणैः शय्या प्रतिभाति ।

यद्वा शय्या=काव्यभेदः । यथाग्निपुराणे—"अभिप्रायविशेषेण कविशक्ति विवृण्वती । मुत्प्रदायिनीति सा मुद्रा सैव शय्यापि नो मते" । (३४२ अ०२६ श्लो० ) । प्रतापरुद्रेऽपि "या पदानां परान्योन्यमैत्री शय्येति कथ्यते" इति ।

श्लेषानुप्राणितोपमालङ्कारः । अनुष्टुब्वृत्तम् ॥ २० ॥

सुन्दर एवं मधुर अक्षरों के प्रसादगुणयुक्त पदों के कारण सुबोध आख्यायि-काकाव्य शय्या (पर्यङ्क व काव्यभेद) के समान चित्ताकर्षक होता है । शय्या भी सुवर्ण के चार चरणों से सुसज्जित तथा सुखपूर्वक जागरण का कारण होती है । सुखप्रद शय्या पर शयनसे श्रान्ति दूर होने पर स्वतः जागरण होता है ॥ २० ॥

एवमनुश्रूयते—पुरा किल भगवान्स्वलोकमधितिष्ठन्परमेष्ठी विकासिनि पद्मविष्टरे समुपविष्टः सुनासीरप्रमुखैर्गीर्वाणैः परिवृत्तो ब्रह्मोद्याः कुर्वन्नन्याश्च कथाः निरवद्या विद्यागोष्ठीर्भावयन्कदाचिदासा·

जयश्रीः

अथ गद्यकाव्यमारभते—"एवम्"–इत्यादिना । एवमनेन प्रकारेण । अनुश्रूयते पारम्पर्येणाकर्ण्यते । किल निश्चयेन । पुरा पुरातनसमये । स्वलोकं = ब्रह्मलोकं सत्यलोकमिति यावत् । अधितिष्ठन् निवसन् । स्वलोके इत्याधारस्य "अधिशीङ्स्थासां कर्म" इत्यनेन कर्मत्वम् । भगवान् = भग ऐश्वर्याद्यस्यातीति भगवान् । यथोक्तम्—"ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति । परमे सर्वोत्तमे पदे आस्पदे तिष्ठतीति परमेष्ठी ब्रह्मा । विकासोऽस्यास्तीति विकासी तस्मिन् प्रफुल्ले । पद्ममेव कमलमेव विष्टर आसनम् । तस्मिन् । 'विष्टरः कुशमुष्टौ स्यादासने च महीरुहे" इति मेदिनीकारः । समुपविष्टः = स्थितः । सुनासीर इन्द्र प्रमुखो येषां तैरिन्द्रप्रभृतिभिः । सुष्ठु नासीरं सैन्यं यस्य स इन्द्रः । "वृद्धश्रवाः सुनासीरः पुरुहूतः पुरन्दरः" इत्यमरः । गीर्वाणैर्देवैः । "गीर्वाणा दानवारयः" इत्यमरः । परिवृत्तो वेष्टितः । ब्रह्म वदन्तीति ब्रह्मोद्याः । "वदः स्वपि क्यप् च" इति क्यप् । वेदविषयिणीः "वेदस्तत्त्वं तपो ब्रह्म" इत्यमरः । अथवा ब्रह्मविषयिणीः । "ब्रह्मोद्या सा कथा यस्यामुच्यते ब्रह्म शाश्वतम्" इति ( मनुस्मृतिः ३।२३१ ) । कथा वार्त्ताः कुर्वन् विदधत् , अन्या अपराः, निरवद्या दोषशून्याः । विद्यानां नानाविधज्ञानानां गोष्ठी समितिः । समानशीलानामेकत्रास्थानं गोष्ठी । यथा च कामसूत्रे वात्स्यायनः—"या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी । परहिंसात्मिका या च न तामवतरेद्बुधः । लोकचित्तानुवर्तिन्या क्रीडामात्रैककार्यया । गोष्ठ्या सह चरन् विद्वांल्लोकसिद्धिं नियच्छति" इति । विद्या अष्टादश । यथोक्तम्—"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" । ( या० १।३ ) ।

कथाभट्टीया

परम्परा से ऐसा इतिहास सुना जाता है कि प्राचीन समय में एकदिन सत्यलोकनिवासी, विकसितकमल के आसन पर विराजमान, इन्द्रादिक देवताओं से अलंकृत भगवान् ब्रह्मा वेदवेदान्तादि विद्याओं की चर्चा करते हुवे विद्यागोष्ठी में संलग्न थे ।

अङ्के। तथासीनं च तं त्रिभुवनप्रतीक्ष्यं मनुदक्षचाक्षुषप्रभृतयः प्रजापतयः सर्वे च सप्तर्षिपुरःसरा महर्षयः सिषेविरे। केचिदृचः स्तुतिचतुराः समुदचारयन्। केचिदपचितिभाञ्जि यजूंष्यपठन्। केचित्प्रशंसासामानि जगुः। अपरे विवृतक्रतुक्रियातन्त्रान्मन्त्रान्व्याचचक्षिरे। विद्याविसंवादकृताश्च तत्र तेषामन्योन्यस्य विद्याविवादाः प्रादुरभवन्।

जयश्रीः

"आयुर्वेदो धनुर्वेदो गान्धर्वश्चार्थशास्त्रकम्" इति च चतस्रः विद्याः। भावयन् परिशीलयन्। कदाचिज्जातुचित्। आसाञ्चक्रे उपाविशत्। "आस उपवेशने" आत्मनेपदी धातुः। त्रिभुवनस्य त्रिलोक्याः प्रतीक्ष्यं पूज्यम्। "प्रतीक्ष्यः पूज्यः" इत्यमरः। तथासीनं पूर्वोक्तप्रकारेणोपविष्टं तं लोकाधिपाः। सप्तर्षयोः विश्वामित्रजमदग्निप्रभृतयः पुरःसरा अग्रेसरा येषां ते तादृशाः। सर्वे महर्षयः सिषेविरे भेजिरे। तेषु स्तुतिषु स्तवेषु चतुरा दक्षाः केचित्। अथवा स्तुतिचतुरा स्तुतिप्रतिपादकाः इति ऋचां विशेषणम्। ऋचः = ऋग्वेदान् समुदचारयन् = उदात्तादिस्वरविवेकपुरःसरमवदन्। तुष्टुवुरिति भावः। केचित्पुनः। अपचितिं पूजाम्। "पूजा नमस्यापचितिः" इत्यमरः। भजन्तीति तथोक्तानि पूजाप्रतिपादकानि यजूंषि यजुर्वेदान्। अपठन् = अवाचन्। केचित्पुनः प्रशंसायुक्तानि स्तुतिपराणि सामानि सामवेदान् जगुरगायन्। प्रशंसायुक्तानि सामानि प्रशंसासामानि। शाकपार्थिवादित्वात्समासः अपरेऽन्ये केचित्। विवृतानि प्रकटीकृतानि, क्रतुक्रियाणां यज्ञपद्धतीनां तन्त्राणि सिद्धान्ता यैस्तान् प्रकाशितयज्ञानुष्ठानसिद्धान्तान्। "तन्त्रं प्रधाने सिद्धान्ते" इत्यमरः। मन्त्रान् व्यचचक्षिरे = व्याख्यातवन्तः। तत्र प्रसक्त्यानुप्रसक्त्या तेषां प्रजापतीनामृषीणां चान्योन्यस्य परस्परं विद्यानां दर्शनादीनां विसंवादेन मतभेदेन कृता उत्पन्नाः शास्त्रमतभेदजनिताः। विद्यानां विवादाः शास्त्रालोचनानि प्रादुरभवन् समुदपद्यन्त।

कथाभट्टीया

मनु, दक्ष, चाक्षुष आदि प्रजापति तथा सप्तर्षिप्रभृति महर्षिगण भी त्रिभुवन के पूजनीय ब्रह्मा की समिति में उपस्थित थे। इस विद्यागोष्ठी में कोई महर्षिगण ऋग्वेद पढ़ रहा था। कोई यजुर्वेद से स्तुति कर रहा था। कोई सामवेद के गान से प्रशंसा में लीन था। कोई यज्ञक्रिया के तिपादक मन्त्रों की व्याख्या

अथातिरोषणः प्रकृत्या महातपा मुनिरत्रेस्तनयस्तारापतेर्भ्राता नाम्ना दुर्वासा, द्वितीयेन मन्दपालनाम्ना मुनिना सह कलहायमानः, साम गायन्क्रोधान्धो विस्वरमकरोत् । सर्वेषु च शापभयप्रतिपन्नमौनेषु मुनिष्वन्यालापलीलयावधीरयति कमलसम्भवे भगवती कुमारी किञ्चिदुन्मुक्तबालभावे भूषितनवयौवने नवे वयसि वर्तमाना, गृहीत-

जयश्रीः

**अथेति**—अथानन्तरम् । प्रकृत्या स्वभावेनैव महारोषणोऽतिकोपनः । महातपा अतितपस्वी । अत्रेऽत्रिनामकमहर्षेस्तनयः पुत्रः । तारापतेश्चन्द्रमसो भ्राता सहोदरः । दक्षपुत्री अनुसूयात्रेः पत्नी । अत्रेस्त्रयः पुत्रा सोमदुर्वासोदत्तात्रेयाख्या आसन् । (विष्णुपुराणे १।१०) । नाम्नाभिधेयेन दुर्वासा ऋषिः । मन्दपालनाम्ना मन्दपालाभिधानेन द्वितीयेनापरेण मुनिना मननशीलेन सह कलहायमानो विवादं कुर्वन् । साम सामवेदं सप्तस्वरैर्गायन् गानं कुर्वन् क्रोधान्धः कोपोन्मत्तः । विस्वरं स्वरभङ्गमकरोच्चकार । क्रोधानवहितः सन् साम्नि स्वरविपर्ययं चक्रे दुर्वासा इति भावः । तं च स्वरभङ्गं श्रुत्वा सरस्वती जहासेत्यग्रे वर्णनम् । शापभयेन शापप्रदानभीत्या प्रतिपन्नं स्वीकृतं मौनं वाचामभावो यैस्तेषु शापप्रदानशङ्कास्वीकृतमुकत्वेषु । सर्वेषु मुनिषु सत्सु । अन्यालापलीलया परवार्ताप्रसङ्गेन कमलसम्भवे कमलयोनौ ब्रह्मणि । तं स्वरभङ्गमवधीरयति = अनाकर्णयति सती । भगवती देवी कुमारी बालिका । अनेन सरस्वत्याश्चपलत्वं द्योत्यते । किञ्चिदुन्मुक्तस्त्यक्तो बालभावो बालत्वं यस्मिंस्तस्मिन् । भूषितं नवं च तत् यौवनं च यस्मिंस्तत् तत्र भूषितनवयौवने शोभितनवीनतारुण्ये नवे नूतने वयसि दशायां वर्त्तमाना । अधुना बहूनि सरस्वतीविशेषणानि । तानि यथा—गृहीतं स्वीकृतं चामरं बालव्यजनं तेन प्रचलन्ती

कथाभट्टीया

में तत्पर था । इस प्रकार प्रसङ्गागत प्रजापति और महर्षियों में शास्त्रों के मतभेद पर आपस में विद्याविवाद होने लगा ।

**अथेति**—कुछ समय के अनन्तर स्वभाव से ही क्रोधी, अतितपस्वी, अत्रि-मुनि के पुत्र, चन्द्रमा के भ्राता दुर्वासा नामक मुनि ने मन्दपाल नामक दूसरे मुनि के साथ कलहके कारण सामवेद के गान में स्वर की अशुद्धि की । इस स्वर की अशुद्धि में शापदेने के भय से सब मुनिगण चुप रहा और ब्रह्माजी भी किसी

तच्चामरप्रचलद्भुजलता पितामहमुपवीजयन्ती, निर्भर्त्सनताडनजातरागाभ्यामिव स्वभावारुणाभ्यां पादपल्लवाभ्यां समुद्भासमाना, शिष्यद्वयेनेव पदक्रममुखरेण नूपुरयुगलेन वाचालितचरणा, मदननगरतोरणस्तम्भविभ्रमं बिभ्राणा जङ्घाद्वितयम्, सलीलमुत्ककलहंसकुलकलालापप्रलापिनि मेखलादाम्नि विन्यस्तवामहस्तकिसलया,

जयश्रीः

भ्राम्यन्ती भुजलता हस्तवल्ली यस्याः सा। भ्रान्तबालव्यजनभ्राम्यद्धस्तवल्लीति यावत्। पितामहं ब्रह्माणमुपवीजयन्ती चामरेण वातं प्रचालयन्ती। निर्भर्त्सनाय दुर्वाससः इति शेषः। तिरस्करणाय यत्ताडनं भूप्रहारस्तेन जात उत्पन्नो रागो लौहित्यं याभ्यां ताभ्यामिवेत्यत्रोत्प्रेक्षा। रोषवशभूप्रहारोत्पन्नलौहित्याभ्यामिति यावत्। स्वभावारुणाभ्यां प्रकृत्या लोहितवर्णाभ्याम्। पादपल्लवाभ्यां चरणकिसलयाभ्यां समुद्भासमाना प्रकाशमाना। पदयोश्चरणयोः क्रमो विक्षेपस्तेन मुखरेण शब्दायमानेन। नूपुरयुगलेन पादवलयेन शिष्यद्वयेनेव विद्यार्थिद्वयेनेव। उत्प्रेक्षालङ्कारः। वाचालितौ मुखरौ चरणौ पादौ यस्याः सा। शिष्यद्वयपक्षे-पदपाठक्रमपाठाभ्यां मुखरेण वाचालेन। पदपाठ—क्रमपाठौ वेदपाठान्तर्विकृतिपाठान्तर्गतौ। मदननगरस्य तोरणस्तम्भौ तयोर्विभ्रमो यस्मिंस्तत्। मदननगरतोरणस्तम्भविभ्रमं कामदेवपुरबहिर्द्वारस्तम्भसंशयम्। "तोरणोऽस्त्री बहिर्द्वारम्" इत्यमरः। जङ्घाद्वितयं = जङ्घायुगलं बिभ्राणा धारयन्ती। सलीलं सहेलम्। उत्का उत्कण्ठिता ये कलहंसाः कादम्बाः। "कलहंसस्तु कादम्बे राजहंसे नृपोत्तमः" इत्यमरः। तेषां कुलं समूहस्तस्य यः कलो मधुरः आलापो नादस्तद्वत्प्रलापिनि शब्दायमाने। उत्कण्ठितकादम्बसमूहमधुरनादशब्दायमाने इति यावत्। मेखलादाम्नि रशनादाम्नि। विन्यस्तः स्थापितो

कथाभट्टीया

दूसरे से बात करने के ढंग से अन्यमनस्क रहे। किन्तु कुछ बालभाव से शून्य नवीन यौवन से अलंकृत अवस्था में वर्तमान, चामर के आन्दोलन के कारण चञ्चल भुजलता से पितामह को हवा करती हुई, दुर्वासा को फटकार बतलाने के ताडन से ही लाल हुवे ऐसे स्वतःलाल पादपल्लवों से सुशोभित, दो शिष्यों के वेदाध्ययन से ही मानो चरणविन्यास से शब्दायमान नूपुर ( नेवरियाँ ) द्वय के झंकार से सुशोभित चरण वाली, मदननगर के तोरण के स्तम्भों के समान सुन्दर दो जङ्घा

विद्वन्मानसनिवासलग्नेन गुणकलापेनेवांसावलम्बिना ब्रह्मसूत्रेण पवित्रीकृतकाया, भास्वन्मध्यनायकमनेकमुक्तानुयातमपवर्गमार्गमिव हारमुद्वहन्ती, वदनप्रविष्टसर्वविद्यालक्तकरसेनेव पाटलेन स्फुरता दशनच्छदेन विराजमाना, संक्रान्तकमलासनकृष्णाजिनप्रतिमां मधुर-

जयश्रीः

वामहस्त एव दक्षिणेतरकर एव किसलयः पल्लवो यया सा । स्थापितदक्षिणेतरकरपल्लवेति यावत् । विदुषां पण्डितानां मानसे हृदये यो निवासः स्थितिस्तेन लग्नेन संपृक्तेन पण्डितहृदयावस्थितिसंसक्तेनेति यावत् । गुणकलापेन गुणसमूहेनेवेत्युत्प्रेक्षा । मानससरोवरेऽवस्थितस्य हंसस्य गुणानां कमलतन्तूनां कलापो लग्नो भवत्येव । अंसावलम्बिना स्कन्धोपरि लम्बमानेन ब्रह्मसूत्रेण यज्ञोपवीतेन पवित्रीकृतः पावनीभूतः कायः शरीरं यस्याः सा । हारं मुक्ताहारमपवर्गमार्गमिव मोक्षसरणिमिव । उद्वहन्ती बिभ्राणा । कीदृशो हारः । भास्वन् देदीप्यमानो मध्यनायको मध्यमणिर्यस्मिंस्तम् । अनेका नानाविधा या मुक्ता मौक्तिकानि ताभिरनुयातं युक्तम् । सूर्यमण्डलमध्यगेनेव मार्गेण सत्यलोकं गच्छति मानवः । यथोक्तम्-"परिव्राड् योगयुक्तश्च शूरश्चाभिमुखो हतः । द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ" । (महाभारते उद्योगपर्वणि ३३। ६१) । तथा-अनेके बहवो ये मुक्ता मोक्षमाप्तास्तैरनुयातमनुगतम् । वदने मुखे प्रविष्टः सर्वविद्या एवालक्तकं तस्य रसस्तेन । वदनप्रविष्टसर्वविद्यालक्तकरसेन=मुखान्तवर्तिसर्वविद्यालाक्षारसेन । इवेत्युत्प्रेक्षा । पाटलेन लोहितवर्णेन स्फुरता कम्पमानेन रोपादिति शेषः । दशनच्छदेन ओष्ठेन । विराजमाना शोभमाना संक्रान्ता प्रतिबिम्बिता कमलासनस्य ब्रह्मणः कृष्णाजिनस्य मृगचर्मणः प्रतिमा छाया यस्याः सा ताम् । मधुरं च तद् गीतं च मधुरगीतं मधुरगानं तस्याकर्णनार्थं श्रवणार्थमवतीर्णः—आगतः । शशिगतहरिणो यस्यां सा मधुरगीताकर्णनावतीर्णशशिहरिणा

कथाभट्टीया

ओं से विभूषित, विलाससहित उत्कण्ठित राजहंसों के समान शब्दायमान काञ्ची (करधनी) पर वामहस्त को स्थापित करने वाली, विद्वानों के मानस में निवास के कारण संलग्न गुण ( धागे और कमलतन्तु ) समूह से ही मानो स्कन्ध पर स्थित यज्ञोपवीत से पवित्रित, देदीप्यमान हारमध्यमणिवा अनेक मोतियों से भूषितहार को मोक्षमार्ग के समान धारण करने वाली, मोक्षमार्ग भी भास्वान् सूर्य और

गीताकर्णनावतीर्णशशिहरिणामिव कपोलस्थलीं दधाना, तिर्यक्सावज्ञमुन्नमितैकभ्रूलता, श्रोत्रमेकं विस्वरश्रवणकलुषितं प्रक्षालयन्तीवापाङ्गनिर्गतेन लोचनाश्रुजलप्रवाहेणेतरश्रवणेन च विकम्पितसितसिन्धुवारमञ्जरीजुषा हसतेव प्रकटितविद्यामदा, श्रुतिप्रणयिभिः प्रणवैरिव कर्णावतंसकुसुममधुकरकुलैरुपास्यमाना, सूक्ष्मविमलेन प्रज्ञाप्रतानेने-

जयश्रीः

मधुरगानश्रवणागतचन्द्रस्थमृगा ताम् । कपोलस्थलीं गण्डपालीं दधाना बिभ्राणा । दधातेः कर्तरि शानच् प्रत्ययः । तिर्यक् वक्रं यथा तथा सावज्ञं सावहेलम् । उन्नमितोर्ध्वमारेचिता, एका भ्रूलता भ्रूवल्ली यया सा । विस्वरस्य स्वरविपर्ययस्य श्रवणेनाकर्णनेन कलुषितं मलिनीभूतमेकं श्रोत्रं कर्णमेकम् । अपाङ्गनिर्गतेन नेत्रप्रान्तनिःसृतेन, लोचनयोरश्रुजलस्य नेत्रवाष्पनीरस्य प्रवाहः=सम्पातस्तेन । प्रक्षालयन्तीव निर्मार्जयन्तीवेत्युत्प्रेक्षा । विकसिता प्रस्फुटिता सिता श्वेतवर्णा सिन्धुवारस्य शुक्लपुष्पतरुविशेषस्य या मञ्जरी वल्लरी तां जुषतीति भजतीति तथोक्तेन=स्फुटितश्वेतपुष्पतरुविशेषवल्लरीभाजा । हसतेव हासं कुर्वतेव । इतरश्रवणेन पार्क्वेन प्रकटितः प्रकाशितो विद्याया ज्ञानस्य मदो गर्वो यया सा । श्रुतिः श्रवणं तत्प्रणयिभिः कर्णानुरागिभिः । अन्यत्र वेदप्रणयिभिः । प्रणवैरोङ्कारैरिव "ओङ्कारः स्वर्गद्वारं तस्माद्ब्रह्माध्येष्यमाण एतदादि प्रतिपद्येत" इति प्रोक्तमापस्तम्बधर्मसूत्रे (१।१३।६) । कर्णावतंसीकृतानि कर्णभूषणानि यानि कुसुमानि पुष्पाणि तेषु यानि मधुकरकुलानि भृङ्गकुलानि तैः । उपास्यमाना सेव्यमाना । सूक्ष्मं च तद्विमलं च तत् तेन सूक्ष्मविमलेन श्लक्ष्णनिर्मलेनांशुकेन वस्त्रेण । प्रज्ञाप्रतानेन बुद्धि-

कथाभट्टीया

मुक्तपुरुषों से अलंकृत रहता है । मुख में प्रविष्ट सब विद्यारूपी अलक्तकरस (लालरस) से ही मानो रक्त और रोष से कम्पित ओष्ठ से शोभित, अपने कपोलप्रदेश में ब्रह्माजी के कृष्ण मृगचर्म के प्रतिबिम्ब को मधुर गीत श्रवण के लिये आये हुवे चन्द्रस्थित हरिण को ही मानो धारण करने वाली, अवज्ञा से वक्रभ्रुकुटियुक्त, नेत्रनिर्गत रोषाश्रुओं के जलसे अशुद्ध स्वर के श्रवण से मलिन एक कर्ण का प्रक्षालन करती हुई ही स्थित, विकसित श्वेत सिन्दुवार की मञ्जरी से युक्त हँसते हुवे ही मानो दूसरे कान से विद्या के गर्व को प्रकट करने वाली, श्रुति ( कर्ण और वेद )

वांशुकेनाच्छादितशरीरा, वाङ्मयमिव निर्मलं दिक्षु दशनज्योत्स्नालोकं विकिरन्ती देवी सरस्वती श्रुत्वा जहास ।

दृष्ट्वा च तां तथा हसन्तीं स मुनिः 'आः पापकारिणि, दुर्गृहीत-विद्यालवावलेपदुर्विदग्धे, मामुपहससि' इत्युक्त्वा शिरःकम्पशीर्यमाणबन्धविशरारोरुन्मिषत्पिङ्गलिम्नो जटाकलापस्य रोचिषा सिञ्चन्निव रोषदहनद्रवेण दश दिशः, कृतकालसन्निधानामिवान्धकारितल-

जयश्रीः

प्रसारेण । इवेत्युत्प्रेक्षा । आच्छादितं प्रावृतं शरीरं वपुर्यया सा । निर्मलं विमलं दशनानां दन्तानां ज्योत्स्नाया चन्द्रिकाया आलोकः प्रकाशस्तं वाङ्मयमिव शास्त्रमिव दिक्षु काष्ठासु । "दिशस्तु ककुभः काष्ठाः" इत्यमरः । विकिरन्ती प्रक्षिपन्ती। देवी सरस्वती शारदा देवी तं स्वरभङ्गं दुर्वाससः श्रुत्वा निशम्य जहास हसितवती ।

दृष्ट्वेति—स मुनिर्दुर्वासाः तथा तेन प्रकारेण हसन्तीं दृष्ट्वा विलोक्य शापजलं जग्राहेत्यन्वयः । आः पापकारिणि दुरितविधायिनि ! दुर्गृहीतो दुराप्तो विद्यालवस्य विद्यांशस्य योऽवलेपो गर्वस्तेन दुर्विदग्धे महामूर्खे ! दुराप्तविद्यांशगर्वमहामूर्खे ! मां दुर्वाससमुपहससि इत्युक्त्वा कथयित्वा । शिरःकम्पनेन शिरोधूननेन शीर्यमाणो विकीर्यमाणो यो बन्धो ग्रन्थिस्तस्मात् विशरारुर्विसरणशीलः "शृवन्द्योरारुः" (पाणिनिः ३।२।१७३) इत्यनेनारुप्रत्ययः । मूर्धधूननविकीर्यमाणग्रन्थिप्रसरणशीलस्य । अत एवोन्मिषन्निर्गच्छन् पिङ्गलिमा पीतता यस्य तस्य जटाकलापस्य जटाजूटस्य रोचिषा कान्त्या रोषदहनद्रवेण कोपाग्निरसेन दश दिशो दशाशाः सिञ्चन्निवाभिषिञ्चन्निवेत्युत्प्रेक्षा । कृतं विहितं कालस्य मृत्योः कृष्णवर्णस्य वा

कथाभट्टीयाः

के प्रेमी ओङ्कारों से ही मानो कर्णस्थित पुष्पों में भ्रमरों से सेवित, सूक्ष्म बुद्धि से ही मानो सूक्ष्म वस्त्र से अलंकृत, शास्त्र के समान निर्मल दन्त किरणों को चारों तरफ फैंकती हुई, भगवती, कुमारी, सरस्वती देवी ने दुर्वासा के इस स्वर भङ्ग में मुसकराहट प्रकट की ।

दृष्ट्वेति—इस प्रकार हँसती हुई सरस्वती को देख करके दुर्वासा मुनिने "अयि पापिनि ! विद्यालव मात्र से गर्व करने वाली तू मेरा उपहास करती है" यह कहा । तदनन्तर शिर कम्पन से ढीले हुवे पीत कान्ति से युक्त जटाकलाप की

लाटपट्टाष्टापदामन्तकान्तःपुरमण्डनपत्रभङ्गमकरिकां भ्रुकुटिमाबध्नन्, अतिलोहितेन चक्षुषामर्षदेवतायै स्वरुधिरोपहारमिव प्रयच्छन्, निर्दयदष्टदशनच्छदभयपलायमानामिव वाचं रुन्धन्दन्तांशुच्छलेन, अंसावस्रंसिनः शापशासनपट्टस्येव ग्रथनन्ग्रन्थिमन्यथा कृष्णाजिनस्य,

जयश्रीः

सन्निधानं समीपावस्थानं यस्यां सा । तादृशीमिपेत्युत्प्रेक्षा । अन्धकारितमन्धकारयुक्तीकृतं ललाटपट्टमेव निटिलतटमेवाष्टापदं हेमशारिफलकं वा यस्यां सा । अन्धकारसहितनिटिलतटशारिफलकामिति यावत् । "अष्टापदं शारिफलम्" इत्यमरः। ललाटपट्टमेवाष्टापदमित्यत्र रूपकम् । अन्तकस्य यमस्यान्तःपुरमण्डनाय अन्तःपुरस्थकामिनीभूषणाय यः पत्रभङ्गः पत्ररचना तस्मिन् मकरिका मीनस्त्री ताम् । यमकामिनीभूषणपत्ररचनामीनरमणीम् , इति यावत् । भ्रूकुटिं भ्रूलताम् । आबध्नन् वक्रां कुर्वन् । पुनः कीदृशः सः । अतिलोहितेन रक्ततरेण चक्षुषा नेत्रेणामर्षदेवतायै कोपदेवतायै । स्वस्य रुधिरं तस्योपहारस्तमिव निजरुधिरोपायनमिवेत्युत्प्रेक्षा । प्रयच्छन् ददत् । निर्दयं निष्करुणं यथा तथा दष्टो यो दशनच्छदोऽधरोष्ठस्तस्य भयेन भीत्या पलायमाना धावमाना तां तथोक्ताम् । निष्करुणदष्टाधरोष्ठभीतिधावमानामिति यावत् । इवेत्युत्प्रेक्षायाम् । एतादृशीं वाचं वाणीं दन्तांशूनां दशनकान्तीनां छलेन व्याजेन रुन्धन् नियच्छन् । अंसात्स्कन्धप्रदेशादवस्रंसत इति अंसावस्रंसी तस्य । कृष्णाजिनस्य कृष्णमृगचर्मणो ग्रन्थि शापस्य शासनपट्टं शापशासनपट्टं तस्य शापप्रदानादेशपट्टस्येवेत्युत्प्रेक्षा । अन्यथा = अस्वाभाविकतया ग्रन्थन् बध्नन् । यथा कृष्णाजिनं प्रान्ते शुक्लं मध्ये बिन्दुविभूषितं च भवति तथैव शासन-

कथाभट्टीया

कान्ति से एवं रोषाग्नि से दश दिशाओं को व्याप्त करता हुवा, काल के सान्निध्य की सूचक तथा ललाट पट्ट रूपी सुवर्ण को मलिन करने वाली एवं यमराज के अन्तःपुर की कामिनियों के लिये पत्र रचना की मछलीभूत भ्रुकुटी को चढ़ाता हुवा, अति लाल नेत्रों द्वारा क्रोधरूपी देवता के रुधिर का उपहारकरने वाला, निर्दय ओष्ठ के दशन के भय से दौड़ती हुई वाणी को दन्तकिरण के व्याज से रोकता हुवा, स्कन्ध प्रदेश से गिरती हुई कृष्ण मृगचर्म को शाप देने के शासनपत्र के समान अस्वाभाविक रूप से बांधता हुवा, शाप देने के भय से शरण में आये हुवे ही

स्वेदकणप्रतिबिम्बितैः शापशङ्काशरणागतैरिव सुरासुरमुनिभिः प्रतिपन्नसर्वावयवः, कोपकम्पतरलिताङ्गुलिना करेण प्रसादनलग्नामक्षरमालामिवाक्षमालामाक्षिप्य कामण्डलवेन वारिणा समुपस्पृश्य शापजलं जग्राह ।

अत्रान्तरे स्वयम्भुवोऽभ्याशे समुपविष्टा देवी मूर्तिमती पीयूषफेनपटलपाण्डुरं कल्पद्रुमदुकूलवल्कलं वसाना, बिसतन्तुमयेनांशुके-

जयश्रीः

पट्टेऽपि प्रान्तं सितं मध्ये चासितान्यक्षराणि जायन्ते इति साम्यम् । स्वेदकणेषु घर्मजललवेषु प्रतिबिम्बितैः सङ्क्रान्तप्रतिबिम्बैः । सुराश्चासुराश्च मुनयश्च ते सुरासुरमुनयस्तैः = देवदानवमुनिभिः । शापस्य शापदानस्य शङ्का सन्देहः, तथा शरणागतैः शरणमाप्तैः । इवेत्युत्प्रेक्षा । प्रतिपन्नाः स्वीकृताः सर्वेऽवयवाः शरीरसंस्थाः यस्यासौ प्रतिपन्नसर्वावयवः समाश्रितसकलदेहसंस्थानः । कोपेन क्रोधेन कम्पो वेपथुस्तेन तरलिताश्चञ्चला अङ्गुलयो हस्तशाखा यस्य तेन कोपकम्पतरलिताङ्गुलिना = क्रोधवेपथुचञ्चलकरशाखेन । करेण हस्तेन । प्रसादने प्रसन्नतापादने लग्नां संसक्ताम्। अक्षरमालामिव वर्णमालामिव । अक्षमालामाक्षिप्य रुद्राक्षमालां तिरस्कृत्य कमण्डलोरिदं कामण्डलवं तेन वारिणा जलेन समुपस्पृश्याचम्य शापजलं शापप्रदानार्थं जलं शापजलं जग्राह गृहीतवान् ।

अत्रेति—अत्रान्तरे एतस्मिन् समये । मूर्तैश्चतुर्भिर्वेदैः सह सावित्री समुत्तस्थाविति दूरेणान्वयः । कीदृशी सा सावित्री । स्वयम्भुवो ब्रह्मणोऽभ्याशे सविधे समुपविष्टा स्थिता मूर्तिमती देहधारिणी देवी पीयूषस्यामृतस्य फेनपटलो डिण्डीरसमुदयस्तद्वत्पाण्डुरं श्वेतवर्णम् । "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः । कल्पद्रुमस्य कल्पवृक्षस्य दुकूलसममुत्तरीयाकारं वल्कलं वृक्षत्वचं वसाना परिदधाना ।

कथाभट्टीया

मानो पसीनों के बिन्दुओं में प्रतिबिम्बित देव, दानव, और मुनियों से सर्वशरीर में व्याप्त, क्रोधी दुर्वासा मुनिने कोप से कम्पित अङ्गुलि वाले हाथ से अनुनय करने वाली अक्षरमाला के समान सुन्दर अक्षमाला को फेंक करके कमण्डलु के जल से आचमन किया और शाप देने के लिये हाथ में जल लिया ।

अत्रेति—इसी अन्तराल में ब्रह्मा के निकट बैठी हुई, मूर्तिमती देवी, अमृत के फेन के समान श्वेत कल्पद्रुम के दुपट्टे के सदृश वल्कल को धारण करने

नोन्नतस्तनमध्यबद्धगात्रिकाग्रन्थिः, तपोबलनिर्जितत्रिभुवनजयपताकाभिरिव तिसृभिर्भस्मपुण्ड्रकराजिभिर्विराजितललाटाजिरा स्कन्धावलम्बिना सुधाफेनधवलेन तपःप्रभावकुण्डलीकृतेन गङ्गास्रोतसेव योगपट्टकेन विरचितवैकक्ष्यका, सव्येन ब्रह्मोत्पत्तिपुण्डरीकमु-

जयश्रीः

बिसतन्तुमयेन कमलतन्तुबहुलेन । अंशुकेन वाससा । उन्नतयोरुच्चयोः स्तनयोः कुचयोर्मध्यदेशे बद्धो गात्रिकाग्रन्थिः स्वस्तिकाकारो ग्रन्थिविशेषो यस्याः सा ; उच्चकुचमध्यप्रान्तबद्धग्रन्थिविशेषा इति यावत् । तपोबलेन तपश्चर्यया निर्जितं विजितं त्रिभुवनं त्रिलोकं तस्य जयपताकाभिरिव विजयवैजयन्तीभिरिव तपोबलनिर्जितत्रिभुवनजयपताकाभिस्तपश्चर्याविजितत्रिलोकविजयवैजयन्ताभिरिवेत्युत्प्रेक्षा । तिसृभिः । भस्मपुण्ड्रकराजिभिर्भस्मतिलकश्रेणिभिः । "वक्रा ललाटगास्तिस्रो भस्मरेखास्त्रिपुण्ड्रकम्" इति हारावली । "ऊर्ध्वपुण्ड्रं मृदा कुर्यात् त्रिपुण्ड्रं भस्मना सदा ॥ तिलकं वै द्विजः कुर्याच्चन्दनेन यदृच्छया" इति । विराजितं शोभितं ललाटमेव निटिलमेवाजिरमङ्गणप्रदेशो यस्याः सा । स्कन्धावलम्बिनांसस्रंसनेन । सुधाफेनवदमृतफेनवद् धवलेन श्वेतवर्णेन योगपट्टकेन वस्त्रविशेषेण । तदुक्तम्—"पृष्ठजान्वोः समायोगे वस्त्रं बलयवद् दृढम् । परिवेष्ट्य यदूर्ध्वं तु तिष्ठेत्तद्योगपट्टकम्" इति तपसः प्रभावो महात्म्यं तेन कुण्डलीकृतेन कुण्डलवद् वर्तुलतां नीतेन । गङ्गास्रोतसेव गङ्गाप्रवाहेणेव विरचितं निर्मितं वैकक्ष्यकं वक्षसि तिर्यक् प्रक्षिप्तं तेन "वैकक्षकं तु तत् । यत्तिर्यक् क्षिप्तमुरसि" इत्यमरः । गङ्गास्रोतःपक्षे तु स्कन्धावलम्बिना परिवहस्य वायोर्मार्गेऽवलम्बिना । यथोक्तं—"तिस्रोतसं वहति यो गगनप्रतिष्ठां ......वायोरिमं परिवहस्य वदन्ति मार्गम्" शाकुन्तलनाटके । सव्येन करेण वामेन हस्तेन ब्रह्मणो विधातुरुत्पत्तिर्जन्म यस्मात्तादृशं पुण्डरीकस्य मुकुलं पद्मकोरकं तद्वत्

कथाभट्टीया

वाली, कमलतन्तुमय वस्त्र से उन्नतस्तनों के मध्य में स्वतिकाकार ग्रन्थि से विभूषित, तपोबल से निर्जित त्रिभुवन की जयपताकाओं के समान तीन भस्म के तिलक की रेखाओं से युक्त ललाट से अलंकृत, स्कन्ध पर लम्बमान, अमृत के फेन के समान धवल तथा तपस्या के प्रभाव से कुण्डलीकृत गंगाप्रवाह से ही मानों उपवीताकार योगपट्ट ( वस्त्रविशेष ) से परिवेष्ठित, ब्रह्मा के उत्पादक कमल के समान मुकुलित

कुलमिव स्फटिककमण्डलुं करेण कलयन्ती, दक्षिणमक्षमालाकृतपरिक्षेपं कम्बुनिर्मितोर्मिकादन्तुरितं तर्जनतरङ्गिततर्जनीकमुत्क्षिपन्ती करम्, 'आः पाप, क्रोधोपहत, दुरात्मन्, अज्ञ, अनात्मज्ञ, ब्रह्मबन्धो, मुनिखेटापसद, निराकृत, कथमात्मस्खलितविलक्षः सुरासुरमुनिमनुजवृन्दवन्दनीयां त्रिभुवनमातरं भगवतीं सरस्वतीं शप्तुमभिलषसि' इत्य-

जयश्रीः

प्रजापतिजन्मकमलकोरकमिवेत्युत्प्रेक्षा । स्फटिककमण्डलुं स्फुटिकमणिरचितकमण्डलुम् । करेण कलयन्ती दधाना । अक्षमालायाः कृतो विहितः परिक्षेपः परिवलनं येन तम् । कम्बुः शङ्खस्तेन निर्मिता रचिता योर्मिकाङ्गुलीयकं तया दन्तुरितं निम्नोन्नतम् "कम्बुर्ना वलये शङ्खे" इति, "अङ्गुलीयकमूर्मिका" इति चामरः । शङ्खरचिताङ्गुलीयकनिम्नोन्नतमिति यावत् । तर्जनाय निर्भर्त्सनाय तरङ्गिता तर्जिता चलितेति यावत् । तर्जन्यङ्गुष्ठनिकटाङ्गुलिर्यस्य स तं निर्भर्त्सनचलिताङ्गुष्ठनिकटाङ्गुलीकमिति यावत् । दक्षिणं करं वामेतरहस्तम् । उत्क्षिपन्ती = उत्थापयन्ती । आः इति क्रोधे । पाप ! पाप्मन् ! क्रोधेन कोपेनोपहत विनष्ट ! दुरात्मन् दुर्विदग्ध ! अज्ञ ! मूर्ख ! अनात्मज्ञ ! । ब्रह्मबन्धो ! ब्राह्मणाधम ! । "ब्रह्मबन्धुरधिक्षेपः" इत्यमरः । "ब्राह्मणस्य बन्धुः परमनुष्ठानाभावाज्जातिब्राह्मणे" इति क्षीरस्वामी । मुनिषु ये खेटा अधमास्तेषु अपसद नीच ! । निराकृतोऽस्वाध्याय ! । "निराकृतोऽस्वाध्यायः" इत्यमरः । आत्मनः स्वस्य स्खलितेन स्मृतिभ्रंशेन विलक्षो जातलज्जस्तत्सम्बुद्धौ । सुरा देवा असुरा दैत्या मुनयो मनुजा मानवाश्च तेषां वृन्दैः सङ्घैर्वन्दनीयां नमस्कारार्हाम् । त्रिभुवनमातरं त्रिलोकजननीम् । भगवतीं सरस्वतीं शारदां शप्तुं कथ-

कथाभट्टीया

स्फटिकमणि के कमण्डलु को वामहस्त में धारण करनेवाली, अक्षमाला से युक्त तथा शङ्ख की बनीहुई अंगूठी को पहिने हुये एवं दुर्वासा को डराने के लिये तर्जनी को कम्पित करते हुवे दक्षिणहाथ को ऊंचा करती हुई, "अयि पापिन्, अतिक्रोधी, दुष्ट, मूर्ख, असावधान, ब्राह्मणाधम, मुनियों में अधमसे भी अधम, स्वाध्याय का त्याग करने वाले, अपने गलत उच्चारण से लज्जित, हे मुनि ! क्या तू देव, दानव, मुनि व मनुजों से वन्दनीय त्रिभुवन की माता भगवती सरस्वती को शाप देने की इच्छा करता है" यह कहती हुई, क्रोध से आसनों को छोडने वाले, ओंकार

भिदधाना, रोषविमुक्तवेत्रासनैरोङ्कारमुखरितमुखैरुत्क्षेपदोलायमानजटाभारभरितदिग्भिः परिकरबन्धभ्रमितकृष्णाजिनाटोपच्छायाश्यामायमानदिवसैरमर्षनिःश्वासदोलाप्रेङ्खोलितब्रह्मलोकैःसोमरसमिव स्वेदविसरव्याजेन स्रवद्भिरग्निहोत्रपवित्रभस्मस्मेरललाटैः कुशतन्तुचारु-

जयश्रीः

मभिलषसि समीहसे इत्यभिदधाना इति ब्रुवाणा । रोषेण क्रोधेन विमुक्तं त्यक्तं वेत्रनिर्मितमासनं यैस्ते तै रोषविमुक्तवेत्रासनैः । कोपत्यक्तवेत्रासनैः । ओङ्कारेण प्रणवेन मुखरितं शब्दायमानं मुखं वदनं येषां तैः । प्रणवोच्चारणतत्परवदनैरिति यावत् । उत्क्षेपेणोत्थापनेन दोलायमानाश्चलन्तो ये जटाभाराः शिरःकेशपाशास्तैर्भरिता व्याप्ता दिश आशा यैस्ते तैः । उत्थानचलज्जटाभारव्याप्ताशैः । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः । परिकरबन्धेन कटिप्रान्तबन्धनेन भ्रमितानि घूर्णितानि यानि कृष्णाजिनानि कृष्णमृगचर्माणि तेषामाटोप आडम्बरस्तस्य छाययानातपेन श्यामायमानः कृष्णायमानो रात्रीभूतो दिवसो दिनं यैस्तथोक्तैः । कटिप्रान्तबन्धनघूर्णितकृष्णमृगचर्माडम्बरकान्तितमोमयदिनैरिति यावत् । "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपे" इत्यमरः । अमर्षेण कोपेन यो निःश्वास एव दोला दोलनयन्त्रं तेन प्रेङ्खोलितः आन्दोलितो ब्रह्मलोकः सत्यलोको यैस्ते तैः । कोपाश्वासदोलान्दोलितसत्यलोकैरिति यावत् । स्वेदस्य विसरस्तस्य व्याजेन घर्मजलप्रवाहव्यपदेशेन सोमरसमिव सोमवल्लीरसमिवेत्युत्प्रेक्षा । सोमलता साम्प्रतं नोपलभ्यत इति बहवः । बोलनघाटीप्रान्ते लभ्यते इति केचित् । स्रवद्भिः स्यन्दमानैः । अग्निहोत्रेण सायम्प्रातर्विधीयमानेन होमे पवित्रं पावनं यद् भस्म तेन स्मेरा विकस्वरा ललाटा निटिलप्रान्ताः येषां ते तैः । कुशानां दर्भाणां तन्तवः सूत्राण्येव चारूणि मनोज्ञानि चामराणि बालव्यजनानि चीरा वस्त्रखण्डानि, चीवराणि कौपीनानि येषां सन्ति तैः । कुशतन्तुचारुचामरचीरचीवरिभिर्दर्भतन्तुरम्यबालव्यजनवस्त्रकौपीनधारिभिरिति यावत् । आषाढिभिराषाढाख्यद-

कथाभट्टीया

को बोलते हुवे, चारो तरफ बिखरी हुई जटाओं से युक्त कमरकसने के कारण हिलती हुई कृष्ण मृगचर्म से अन्धकार को फैलाने वाले, क्रोधजनित निश्वास से ब्रह्मलोक को व्याप्तकरने वाले पसीने के मिस से सोमरस को झरने वाले, ललाट में

चामरचीरचीवरिभिराषाढिभिः प्रहरणीकृतकमण्डलुमण्डलैर्मूर्तैश्चतुर्भिर्वेदैः सह बृसीमपहाय सावित्री समुत्तस्थौ ।

ततो 'मर्षय भगवान्, अभूमिरेषा शापस्य' इत्यनुनाथ्यमानोऽपि विबुधैः, 'उपाध्याय, स्खलितमेकं क्षमस्व' इति बद्धाञ्जलिपुटैः प्रसाद्यमानोऽपि स्वशिष्यैः, 'पुत्र मा कृथास्तपसः प्रत्यूहम्' इति निवार्यमाणोऽप्यत्रिणा, रोषावेशविवशो दुर्वासाः 'दुर्विनीते, व्यपनयामि ते वि-

जयश्रीः

ण्डिभिः । पालाशदण्डिभिरित्यर्थः । यथाह मनुः-"ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ । पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः" (११४५) । "पालाशो दण्ड आषाढः" इत्यमरः । "विशाखाषाढादण् मन्थदण्डयोः" इत्यनेनाण्प्रत्ययः । प्रहरणीकृतमायुधीकृतं कमण्डलुमण्डलं कमण्डलुनामकजलपात्रसमूहो यैस्ते तैः । तथोक्तैः । मूर्तैर्देहधारिभिश्चतुर्भिर्वेदैः सह सावित्री बृसीं वेत्रासनमपहाय त्यक्त्वा। "व्रतिनामासनं बृसी" इत्यमरः । समुत्तस्थौ = उत्थिता ।

तत इति—ततस्तदनन्तरम् । भगवान् सामर्थ्यवान् । त्वं मर्षय सहस्व । एषा सरस्वती । शापस्याभूमिरस्थानम् । शापयोग्या नास्तीति भावः । इति विबुधैर्देवैरनुनाथ्यमानोऽपि प्रार्थ्यमाणोऽपि । उपाध्याय ! आचार्य ! । एकं स्खलितमपराधं क्षमस्व सहस्वेति बद्धाञ्जलिपुटैः कृताञ्जलिभिः । स्वशिष्यैरन्तेवासिभिः । प्रसाद्यमानोऽपि प्रसन्नीक्रियमाणोऽपि । पुत्र ! सुत ! । तपसो ध्यानादितपश्चर्यायाः प्रत्यूहमन्तरायं मा कृथा मा कुरु । इत्यत्रिणा महर्षिणा । निवार्यमाणोऽपि कोपात्प्रत्यानीयमानोऽपि । रोषावेशेन क्रोधावेगेन विवशोऽस्वाधीनः । दुर्वासा ऋषिः ।

कथाभट्टीया

अग्निहोत्र की भस्म से अलंकृत, दर्भों के चामर और वस्त्रखण्ड कौपीन आदि से विभूषित, पलासदण्ड और कमण्डलु वाले, मूर्तिमान् चारों वेदों के साथ सावित्री आसन को छोड़ कर खड़ी होगई ।

तत इति—इस के अनन्तर "हेभगवन् ! क्षमा करें यह शापदेने योग्य नहीं है" इस प्रकार देवताओं से प्रार्थित, "उपाध्याय ! इस एक प्रथम अपराध को क्षमा करें" इत्यादि हाथ जोड़ कर अपने शिष्यों से प्रसन्न किया गया, "पुत्र ! तपस्या में विघ्न मत करें" इस कथन द्वारा अत्रिमुनि से निषिद्ध, क्रोधाविष्ट दुर्वासानें

द्याजनितामुन्नतिमिमाम् । अधस्ताद्गच्छ मर्त्यलोकम्' इत्युक्त्वा तच्छापोदकं विससर्ज । प्रतिशापदानोद्यतां सावित्रीम् 'सखि, संहर रोषम्। असंस्कृतमतयोऽपि जात्यैव द्विजन्मानो माननीयाः' इत्यभिदधाना सरस्वत्येव न्यवारयत् ।

अथ तां तथा शप्तां सरस्वतीं दृष्ट्वा पितामहो भगवान्कमलोत्पत्तिलग्नमृणालसूत्रामिव धवलयज्ञोपवीतिनीं तनुमुद्वहन्, उद्गच्छदच्छाङ्गु-

जयश्रीः

दुर्विनीते सरस्वति ! ते तव विद्याजनितां विद्योत्पन्नामुन्नतिं समुदयं व्यपनयामि-दूरीकरोमि । अधस्तान्मर्त्यलोकं गच्छेत्युक्त्वा तच्छापोदकं गृहीतपूर्वशापजलम् । विससर्ज तत्याज । प्रतिशापदाने उद्यतां तत्परां सावित्रीं 'सखि ! रोषं कोपं संहर सङ्कुचितं कुरु । असंस्कृताः संस्कारशून्या मतयो बुद्धयो येषां ते तैः । तादृशा अपि द्विजन्मानो ब्राह्मणा जात्यैव जन्मनैव माननीया संमानार्हा भवन्ति । इत्यभिदधाना कथयन्ती सरस्वत्येव शारदैव तां न्यवारयत् प्रतिशापदानादपसारयत् । अत्र सरस्वतीहासेनोद्विग्नो दुर्वासास्तां शशापेति सम्बन्धः । सावित्री च सरस्वतीपक्षपातिनीति ज्ञेयम् ।

अथेति । अथ पितामहः सुधीरमुवाचेति सम्बन्धः । अथानन्तरम् । तथा तेन प्रकारेण शप्तां तां सरस्वतीं देवीं दृष्ट्वा विलोक्य । भगवान्पितामहो ब्रह्मा कमलात् पद्मात् योत्पत्तिर्जन्म तया लग्नानि संसक्तानि मृणालसूत्राणि कमलतन्तवो यस्यां सा तामिवेत्युत्प्रेक्षा । पद्मजन्मसंसक्तकमलतन्तुमिति यावत् । धवलं शुभ्रं यज्ञोपवीतमस्यामस्तीति तादृशाम् । तनुं देहमुद्वहन् धारयन् । उद्गच्छन् प्रसरन् ,

कथाभट्टीया

"दुर्विनीत सरस्वति ? तेरे इस विद्याके गर्व को दूर करता हूँ, तू मर्त्यलोक में जा" यह कह कर उस शाप जल को फेंक दिया । इस शाप से क्रोधित एवं शाप के बदले शाप को देने वाली सावित्री को सरस्वतीने "सखि ? रोष मत करे । मूर्ख भी ब्राह्मण जाति मात्र से ही पूजनीय होते हैं" यह कह कर मना किया ।

अथेति । इसप्रकार शाप को प्राप्तहुई सरस्वती को देखकर, कमलोत्पत्ति से लगे हुवे मृणालसूत्र के समान धवल यज्ञोपवीतको धारण करने वाले, उज्ज्वल नीलमणिकी अंगूठीको त्रिभुवन के उपद्रव की शान्ति के लिये कुशासमूह को ही मानो धारण करनेवाले दक्षिण हाथ से शाप के कोलाहल को शान्तकर के अतिनिर्मल व दीर्घदन्त-

लीयमरकतमयूखलताकलापेन त्रिभुवनोपप्लवप्रशमकुशापीडधारिणेव दक्षिणेन करेण निवार्य शापकलकलमतिविमलदीर्घैर्भाविकृतयुगारम्भसूत्रपातमिव दिक्षु पातयन् दशनकिरणैः, सरस्वतीप्रस्थानमङ्गलपटहेनेव पूरयन्नाशाः स्वरेण, सुधीरमुवाच—ब्रह्मन्, न खलु साधुर्नवितोऽयं पन्थाः येनासि प्रवृत्तः। निहन्त्येष परस्तात्। उद्दामप्रसृतेन्द्रियाश्वसमुत्थापितं हि रजः कलुषयति दृष्टिमनक्षजिताम्। कियद्

जयश्रीः

अच्छः स्वच्छः, अङ्गुलीयस्यार्मिकाया मरकतं नीलमणिस्तस्य मयूखा एव किरणा एव लता वल्ली तस्याः कलापः समूहो यस्मिंस्तेन। प्रसरद्भिरङ्गुलीयकानीलमणिकिरणवल्लीसमूहेनेति यावत्। त्रिभुवने त्रिलोक्यां यः उपप्लव उपद्रवस्तस्य प्रशमार्थं शान्त्यै कुशापीडं दर्भसमूहं धारयतीति तेन तथोक्तेन त्रिलोक्युपद्रवशान्तिदर्भसमूहभृता। तादृशेनेवेत्युत्प्रेक्षा। दक्षिणेन करेणापसव्येन हस्तेन शापकलकलं शापप्रदानजनितं कोलाहलम्। निवार्यापसार्य। अतिविमला विशदा दीर्घा आयताश्च तैस्तथोक्तैः। दशनानां दन्तानाम्। किरणैः रश्मिभिः। भाविन अनागतस्य कृतयुगस्य सत्ययुगस्यारम्भः प्रारम्भस्तस्य सूत्रपातः सूत्रनिक्षेपस्तमिव दिक्षु पातयन्। सरस्वत्याः प्रस्थाने प्रयाणे यो मङ्गलपटहः कल्याणकारिवाद्यध्वनिस्तेनेवेत्युत्प्रेक्षा। सरस्वतीप्रयाणमङ्गलवाद्येनेवेति यावत्। स्वरेण स्ववाचा। आशा दिशः पूरयन् व्याप्नुवन् सुधीरं गम्भीरं यथा तथोवाच जगाद पितामहः। हे ब्रह्मन्! येन पथा प्रवृत्तोऽसि, अयं पन्था मार्गः साधुभिः सत्पुरुषैः सेवित आचरितो नास्ति। परस्तात् अग्रे एष मार्गो निहन्ति पातयति। उद्दामं तीव्रं यथा तथा प्रसृतानि विषयलिप्तानि इन्द्रियाण्येवाश्वास्तुरङ्गास्तैः समुत्थापितं समुत्क्षिप्तं रजो

कथाभट्टीया

किरणों से आगामी सत्ययुगके सूत्रपात को करते हुये एवं सरस्वती के प्रस्थानकाल के मङ्गलबाजे की तरह अपनी आवाज से दिशाओं को व्याप्त कर के भगवान् पितामह बोले हे भगवन्! जिस मार्गका आपने अनुसरण किया है वह सज्जनों का मार्ग नहीं है। यह मार्ग आगे चलकर दुःखदायक होवेगा। इन्द्रियों के वशीभूत पुरुषों की दृष्टि को अत्यन्तविषयों में व्यापृत इन्द्रियरूपी अश्वों से उत्थापित धूलि (रजोगुण) मलिन करदेती है। धूलि से व्याप्त दृष्टि से कितनी दूरतक देखसकता है। शिक्षित

दूरं वा चक्षुरीक्षते। विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्वानर्थानसतः सतो वा। निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः। आलोकमपहाय कथं तमसि निमज्जसि। क्षमा हि मूलं तपसाम्। परदोषदर्शनदक्षा दृष्टिरिव कुपिता बुद्धिर्न ते आत्मरागदोषं पश्यति। क्व महातपोभारवैवधिकता। क्व पुरोभागित्वम्।

जयश्रीः

रागो धूलिश्च। न अक्षजितामनक्षजितामिन्द्रियार्थतत्पराणाम्। दृष्टिं बुद्धिं कलुषीकरोति विवेकशून्यां कुरुते। अक्षो रथाङ्गम्। तं जयन्तीत्यक्षजितो न अक्षजितोऽनक्षजितस्तेषां रथधारणासमर्थानां तुरगाणां दृष्टिं नेत्रं कलुषीकरोति। वा तादृशं रजसाविलं चक्षुः कियद्दूरमीक्षते पश्यति। कृतबुद्धयः संस्कृतमतयो जना विशुद्धया निर्मलया धिया मत्या सर्वान्, अर्थान्, असतोऽविद्यमानान्। सतो विद्यमानान् वा पदार्थान् पश्यन्ति विलोकन्ते। पयःपावकयोरिव जलाग्न्योरिव। धर्मक्रोधयोः धर्मकोपयोरेकत्रैकस्मिन्स्थले इयं वृत्तिर्निवासः। निसर्गेण स्वभावेन विरोधिनी प्रतिकूला। आलोकं प्रकाशं ज्ञानं च। अपहाय विहाय कथं तमस्यन्धकारेऽज्ञाने च निमज्जसि प्रविशसि। हि नूनं सर्वतपसां सर्वतपश्चर्याणाम्। मूलमुपादानं क्षमैव तितिक्षैव। परेषामन्येषां दोषा अपराधास्तेषां दर्शने विलोकने दक्षा निपुणा दृष्टिरिव कुपिता क्रुद्धा ते बुद्धिर्मतिरात्मनः स्वस्य रागः स्नेह एव दोषोऽपराधस्तम्। न पश्यति न विलोकते। कुपिता धातुवैषम्यदूषिता मतिः स्वाभीष्टपदार्थेषु दोषं वैगुण्यं न पश्यति। महातपोभारस्य महातपश्चर्याभारस्य वैवधिकता भारवाहित्वं क्व। "विवधेन हरति विवधिकः, पक्षे ठक्—वैवधिकः। विवधवीवधशब्दौ उभयतो बद्धशिक्ये स्कन्धवाह्ये काष्ठे वर्तेते" इति सिद्धान्तकौमुदी। क्व च कुत्र पुरोभागित्वं दोषदर्शिता। "दोषैकदृक् पुरोभागी" इत्यमरः।

भाषाटीका

पुरुष अच्छे बुरे सब कार्यों को निर्मल बुद्धि से देख सकते हैं। अग्नि और जल की तरह यह धर्म और क्रोधका एकत्र निवास स्वभाव से ही विरुद्ध है। अर्थात् दोनों का एकत्र निवास हो नहीं सकता। प्रकाश को छोड़कर अन्धकारमें कैसे प्रविष्ट होते हो। क्षमाही तो तप का मूल है। दूसरे के दोष देखने में चतुर दृष्टि के समान क्रोधयुक्त तेरी बुद्धि अपने दोषको नहीं देखती है। महातपस्या के भारको धारण करना

अतिरोषणश्चक्षुष्मानन्ध एव जनः । नहि कोपकलुषिता विमृशति मतिः कर्तव्यमकर्तव्यं वा । कुपितस्य प्रथममन्धकारीभवति विद्या, ततो भ्रूकुटिः । आदाविन्द्रियाणि रागः समास्कन्दति, चरमं चक्षुः । आरम्भे तपो गलति, पश्चात्स्वेदसलिलम् । पूर्वमयशः स्फुरति, अनन्तरमधरः । कथं लोकविनाशाय ते विषपादपस्येव जटावल्कलानि जातानि । अनुचिता खल्वस्य मुनिवेषस्य हारयष्टिरिव वृत्तमुक्ता चित्तवृत्तिः ।

जयश्रीः

अतिरोषणः कोपनप्रकृतिर्जनः। चक्षुष्मानपि सनेत्रोऽपि । अन्ध एव नेत्रहीन एव । कोपकलुषिता क्रोधदूषिता मतिः कर्तव्यमकर्तव्यं वा कार्याकार्यं न विमृशति न विवेचयति । कुपितस्य क्रुद्धस्य जनस्य प्रथमं सर्वप्रथमं विद्या ज्ञानमन्धकारीभवति तमसाव्रियते । ततो विद्यावरणानन्तरम् । भ्रुकुटिर्भ्रूलतान्धकारीभवति । आदौ प्रथमं रागो लौहित्यं विषयानुरागश्च । इन्द्रियाणि समास्कन्दति = अभिभवति । चरमं पश्चात् चक्षुर्नेत्रमभिभवति । आरम्भे आदौ तपो गलति क्षयति । ततश्च स्वेदसलिलं घर्मजलं पतति । पूर्वमादावयशो दुष्कीर्तिः स्फुरति निःसरति । अनन्तरं पश्चात् । अधरोष्ठः कम्पते । विषपादपस्येव गरलवृक्षस्येव ते तव जटा वल्कलानि च जटावृक्षत्वचश्च लोकविनाशाय जगत्क्षतये जातानि । उपमालङ्कारः । अस्य मुनिवेषस्य ऋषिनेपथ्यस्य हारयष्टिरिव हारलतेव । वृत्तेनावदानकर्मणा मुक्ता हीना चित्तवृत्तिर्मनोव्यापारः । अनुचिताऽयोग्या । हारयष्टिरपि वृत्ता वर्तुला मुक्ता मौक्ति-

कथाभट्टीया

तो कहां और परदोषदर्शन कहां । अतिक्रोधीपुरुष नेत्रों के होते हुवे भी अन्ध ही है । क्योंकि कोप से कलुषितमति कर्तव्य वा अकर्तव्य का विचार नहीं कर सकती । पहिले क्रोधी पुरुष की विद्या अन्धकार में पड़ती है और बाद में भ्रूकुटि । प्रथम विषयानुराग इन्द्रियों को दबाता है और पीछे नेत्र में राग ( ललाई ) होता है । प्रथम तप क्षीण होता है और पीछे पसीना गिरता है । प्रथम दुष्कीर्ति फैलती है और बाद में अधरोष्ठ कम्पित होता है । यह तेरे जटावल्कल विषवृक्ष के समान संसार के विनाशकारक कैसे हो गये । यह दुष्ट तेरी चित्तवृत्ति मुक्ताहार के समान मुनिवेष के अनुकूल नहीं है । अशान्तचित्त वाला तू नट के समान कृत्रिम इस तपस्वी के वेष को व्यर्थ ही धारण करता है । इस कार्य से तेरा

शैलूष इव वृथा वहसि कृत्रिममुपशमशून्येन चेतसा तापसाकल्पम्। अल्पमपि न ते पश्यामि कुशलजातम्। अनेनातिलघिम्नाद्याप्युपर्यव प्लवसे ज्ञानोदन्वतः। न खल्वनेडमूकाः एडा जडा वा सर्व एते महर्षयः। रोषदोषनिषद्ये स्वहृदये निग्राह्ये किमर्थमसि निगृहीतवाननागसं सरस्वतीम्। एतानि तान्यात्मप्रमादस्खलितवैलक्ष्याणि, यैर्वाच्यतां यात्यविदग्धो जनः' इत्युक्त्वा पुनराह—'वत्से सरस्वति, वि-

जयश्रीः

कानि यस्यां सा तादृशी भवति। श्लेषानुप्राणितोपमालङ्कारः। उपशमशून्येन शान्तिरहितेन चेतसा मनसा, कृत्रिममस्वाभाविकं तापसानां तपस्विनामाकल्पं नेपथ्यं शैलूष इव नट इव वृथा व्यर्थमेव वहसि धारयसि। शैलूषोऽपि—अभिनयप्रसङ्गेन तापसस्वरूपं वृथैव धत्ते। "शिलूषस्य ऋषेरपत्यं शैलूषः" इति क्षीरस्वामी। ते तव। अल्पमपि स्वल्पमपि। कुशलजातं मङ्गलप्रकरं न पश्यामि न विलोके। अनेनातिलघिम्ना क्षुद्रजनोचितव्यापारेण। ज्ञानोदन्वतो ज्ञानसागरस्य। उपर्यवाद्यापि साम्प्रतमपि प्लवसे तरसि। अन्तःप्रवेशाभावात्। गुरु वस्तु जले ब्रुडति लघु च तरति। खलु निश्चयेन। एते महर्षयो महामुनयः। सर्व एव। अनेडमूका श्रवणवचनाभ्यामशक्ताः। एडाः कर्णशून्याः। जडा मन्दमतयः। न सन्ति। "जडोऽज्ञेऽनेडमूकस्तु वक्तुं श्रोतुमशिक्षिते" इत्यमरः। रोषः कोप एव दोषोऽपराधस्तस्य निषद्या नियमेनावस्थितिर्यस्मिंस्तत्र तस्मिन्। कोपापराधस्थाने इति यावत्। स्वहृदये स्वचेतसि निग्राह्ये किमर्थमनागसमनपराधां सरस्वतीं निगृहीतवान् शप्तवान्। एतानि तानि। आत्मनः स्वस्य प्रमादोऽनवधानता तस्य स्खलितानि विस्मरणानि तेषां वैलक्ष्याणि लज्जितानि। यैरविदग्धोऽप्रवीणो जनो वाच्यतां गर्ह्यतां याति गच्छति। इत्युक्त्वा कथयित्वा पितामहः सरस्वतीं पुनराहो-

कथाभट्टीया

स्वल्प भी मङ्गल मैं नहीं देखता हूं। इस घृणित कार्य से प्रतीत होता है के तू आज तक भी ज्ञानसमुद्र के ऊपर ही तैर रहा है। ये सब महर्षिगण शाप देने व सुनने में असम[१] वा बधिर वा मूर्ख नहीं है। रोष व दोषों के स्थान अपने हृदय को नहीं रोककर निरपराध सरस्वती को तैंने कैसे शाप दिया। ये सब अपने अपराध के विस्मरण से लज्जित कार्य है जिनसे मूर्ख पुरुष निन्दापात्र

षादं मा गाः । एषा त्वामनुयास्यति सावित्री । विनोदयिष्यति चास्मद्विरहदुःखिताम् । आत्मजमुखकमलावलोकनावधिश्च ते शापोऽयं भविष्यति' इति । एतावदभिधाय विसर्जितसुरासुरमुनिमनुजमण्डलः ससम्भ्रमोपगतनारदस्कन्धविन्यस्तहस्तः समुचिताह्निककरणायोदतिष्ठत् । सरस्वत्यपि शप्ता किञ्चिदधोमुखी धवलकृष्णशारां कृष्णाजिनलेखामिव दृष्टिमुरसि पातयन्ती सुरभिनिःश्वासपरिमललग्नैर्मूर्तैः शा-

जयश्रीः

वाच । हे सरस्वति देवि ! विषादं दुःखं मा गा न प्राप्नुहि । एषा सावित्री देवी त्वामनुयास्यति = अनुगमिष्यति । अस्माकं विरहो वियोगस्तेन दुःखितां खिन्नां त्वां विनोदयिष्यति प्रसादयिष्यति । आत्मजस्य स्वपुत्रस्य मुखकमलं वदनपद्मं तस्यावलोकनं दर्शनमेवावधिरवसानं यस्य सः । ते तवायं शापो भविष्यति । "तव यदा पुत्रो भविष्यति । तदैव त्वं शापविमुक्ता भविष्यसि" इति भावः । एतावदभिधायोक्त्वा । विसर्जितं प्रेषितं सुरासुराणां देवदैत्यानां मुनीनां मनुजानां नराणां च मण्डलं समूहो येन सः । प्रेषितदेवदानवमुनिमानवसमूह इति यावत् । ससम्भ्रमं सत्वरं यथा तथोपगत आयातो नारदो मुनिस्तस्य स्कन्धेंऽसप्रान्ते विन्यस्तः स्थापितो हस्तो भुजो येन सः । शीघ्रसमागतनारदांसप्रदेशस्थापितभुजः इति यावत्। समुचितं योग्यं यदाह्निकं दैनिकं सन्ध्यादिकर्म तस्य करणायोदतिष्ठदुदगच्छत् । 'आह्निकं स्यात्पुनरहर्निर्वर्त्ये नित्यकर्मणि" इति हेमचन्द्रः। शप्ता सरस्वत्यपि सावित्र्या समं गृहमगादिति सम्बन्धः । तथा शप्ता सरस्वत्यपि किञ्चिदधोमुखीलज्जानम्रमुखी । धवलः सितः, कृष्णः श्यामो नीलो वा तेन शारां शबलाम् । कृष्णाजिनलेखामिव कृष्णमृगचर्मलेखामिव । अत्रोत्प्रेक्षा । दृष्टिं नेत्रमुरसि वक्षसि

कथाभट्टीया

होता है । पितामहने इत्यादि दुर्वासा को कह कर के फिर सरस्वती को कहा कि—हे सरस्वति ! दुःखित मत हो । यह सावित्री तेरी साथ जावेगी । यहां के विरह से दुःखित तेरे मन को प्रसन्न करेगी । तेरे पुत्रोत्पत्ति के अनन्तर यह शाप शान्त हो जावेगा । इत्यादि कह कर के देव, दानव, मुनि व मनुष्यों के मण्डल को विसर्जित कर के शीघ्र आये हुवे नारदमुनि के स्कन्ध पर हाथ रखकर समुचित आन्हिक ( सन्ध्यादिकर्म ) करने के लिये पितामह भी खड़े हो गये । शाप के कारण ताम्रमुखी, काली घोली अपनी दृष्टि को कृष्णमृगचर्म की लेखा की

पाल्लवैरिव षट्चरणचक्रैराकृष्यमाणा शापशोकशिथिलतहस्ताधोमुखीभूतेनोपदिश्यमानमर्त्यलोकावतरणमार्गेव नखमयूखजालकेन नूपुरव्याहाराहूतैर्भवनकलहंसकुलैर्ब्रह्मलोकनिवासिहृदयैरिवानुगम्यमाना समं सावित्र्या गृहमगात् ।

अत्रान्तरे सरस्वत्यवतरणवार्तामिव कथयितुं मध्यमं लोकमवत-

जयश्रीः

पातयन्ती स्थापयन्ती । सुरभिर्मनोरमो यो निश्वासस्तस्य परिमलेन गन्धेन लग्नैः संसक्तैः । मनोरमनिश्वासगन्धसंसक्तैरिति यावत् । षट्चरणानां भ्रमराणां चक्रैः समूहैः । मूर्तैर्मूर्तिमद्भिः । शापाक्षरैः शापप्रदानवर्णैरिव । आकृष्यमाणा अनुगम्यमानेति भावः । शापशोकेन शापदुःखेन शिथिलितौ श्लथीभूतौ यौ हस्तौ करौ ताभ्यामधोमुखीभूतेन नम्रीभूतेन नखमयूखजालकेन नखकिरणसमूहेन । उपदिश्यमानो निर्दिश्यमानो मर्त्यलोकावतरणस्य भूलोकगमनस्य मार्गो वर्त्म यस्याः सा । निर्दिश्यमानभूलोकगमनसरणिरिति यावत् । पथप्रदर्शको हि पन्थानमङ्गुल्यैव दर्शयति । नुपुराणां पादकटकानां व्याहारैः शब्दैराहूतैः समाहूतैः । भवनकलहंसकुलैर्गृहराजहंससमूहैः । ब्रह्मलोके सत्यलोके निवसन्तीति ब्रह्मलोकनिवासिनस्तेषां हृदयैः स्वान्तैरिवेत्युत्प्रेक्षा । "स्वान्तं हृन्मानसं मनः" इत्यमरः । अनुगम्यमानाऽन्वीयमाना सावित्र्या समं सह । सार्धं तु साकं सत्रा समं सह" इत्यमरः । गृहं सदनमगात्जगाम ।

अथ कविः प्रदोषं वर्णयति-"अत्रान्तरे" इत्यादिना । अत्रान्तरे एतस्मिन्नन्तराले । अंशुमाली किरणमाली सूर्यः । सरस्वत्यवतरणस्य सरस्वत्या भूलोकगम-

कथाभट्टीया

तरह अपने वक्षःस्थल में डालती हुई, सुगन्धित निःश्वास के गन्ध से आगत मूर्तिमान् शापाक्षरों की तरह भ्रमर कुलों से व्याप्त, शाप के दुःख से नम्रीभूत हाथों के नखकिरणों से मृत्युलोक के मार्ग की सूचना को प्राप्त हुई, सत्यलोक के निवासी पुरुषों के हृदयों से ही मानो नूपुर के शब्दों से समाहूत पालितराजहंसों से अनुगत, सरस्वती सावित्री के साथ गृह को गई ।

अब कवि प्रदोष का वर्णन करता है—इसीसमय में सरस्वती के भूलोक-

नारांशुमाली। (१)[क्रमेण च मन्दायमाने मुकुलितबिसिनीविसरव्यसन-विषण्णसरसि वासरे, मधुमदमुदितकामिनीकोपकुटिलकटाक्षैरक्षिप्यमाण इव क्षेपीयः क्षितिधरशिखरमवतरति तरुणतरकपिलपनलोहिते लोकैकचक्षुषि भगवति, प्रस्नुतमुखमाहेयीयूथक्षरत्क्षीरधाराधवलितेष्वासन्नचन्द्रोदयोद्दामक्षीरोदलहरीक्षालितेष्विव दिव्याश्रमोपशल्येष्व-

जयश्रीः

नस्य वार्ता सन्देशं कथयितुमिव वदितुमिव मध्यमं लोकं भूलोकम् । अवततार जगाम । मुकुलितानां कोरकितानां बिसिनीनां पद्मिनीनां विसरस्य समूहस्य व्यसनेन दुःखेन विषण्णं खिन्नं सरो यस्मिंस्तस्मिन् । वासरे दिवसे क्रमेण शनैः । मन्दायमाने निस्तेजस्के सति । अत्र विसरशब्दः औणादिकः षण्ढपर्यायोऽपि विज्ञेयः । मधुमदेन मद्यमदेन मुदिता हर्षिताः याः कामिन्यस्तरुण्यस्तासां कोपेन क्रोधेन कुटिला वक्राः कटाक्षा नेत्रप्रान्तास्तैराक्षिप्यमाण इव पात्यमान इव । तरुणतरा युवानो ये कपयो वानरास्तेषां लपनानि वदनानि तद्वल्लोहिते रक्तवर्णे । लोकानां जनानामेकं चक्षुर्नेत्रं तस्मिन् । भगवति सूर्ये क्षेपीयस्तूर्णतरं यथा तथा क्षितिधरस्यास्ताचलस्य शिखरं शृङ्गमवतरति सत्यवरोहति सति । प्रस्नुतं प्रस्नुतं मुखं वदनं यस्यास्तादृशी या माहेयी गौस्तासां यूथेभ्यः समूहेभ्यः क्षरन्ती या क्षीरधारा दुग्धधारा तया धवलितेषु सितवर्णेषु । आसन्नः समीपस्थो यश्चन्द्रोदयः चन्द्रप्रादुर्भावस्तेनोद्दामं उद्रिक्तो यः क्षीरोदः क्षीरसागरस्तस्य लहरीभिस्तरङ्गैः क्षालितेषु मार्जितेष्विवेत्युत्प्रेक्षा । दिव्यानां दिवि भवानामाश्रमाणां यतिकुटीनामु-

कथाभट्टीया

गमन की सूचना देने के लिये ही मानो भगवान् सूर्य भूलोक में उतरा । अर्थात् अस्ताचल पर पहुंचा । क्रम से संकुचित कमलिनीसमूह के दुःख से दुःखित सरोवर से युक्त दिन के निस्तेज होने पर, मद्य के मद (नशे) से हर्षित कामिनियों के कोप से कुटिल कटाक्षों से गिराये गये ही मानो युवा वानर के मुख के समान लोहित भगवान् सूर्य के शीघ्र ही अस्ताचल पर चले जाने पर, समीपस्थित चन्द्रोदय से वर्धित क्षीरसागर की लहरों से क्षालित ही मानो हर्षित मुख धेनुओं के समूहों की झरती हुई दूध की धारा से धवलित दिव्याश्रमों के भागों में मध्यान्ह के अनन्तर

( १ ) [ ] एतदन्तर्गतोऽशः साहित्यमध्यमपरीक्षाबहिर्भूतः ।

पराह्णप्रचारचलिते, चामरिणि चामीकरतटताडनरणितरदने रदति सुरस्रवन्तीरोधांसि स्वैरमैरावते, प्रसृतानेकविद्याधराभिसारिकासहस्रचरणालक्तकरसानुलिप्त इव प्रकटयति च तारापथे पाटलताम्, तारापथप्रस्थितसिद्धदत्तदिनकरास्तमयार्घ्यावर्जिते रञ्जितककुभि, कुसुम्भभासि स्रवति पिनाकिप्रणतिमुदितसन्ध्यास्वेदसलिल इव रक्तचन्दनद्रवे, वन्दारुमुनिवृन्दारकवृन्दबध्यमानसन्ध्याञ्जलिवने, ब्रह्मोत्प-

जयश्रीः

शाल्यानि समीपभागास्तेषु। अपराह्णसमये यः प्रचारो गमनं तेन चलिते गन्तुं प्रवृत्ते। चामरिणि बालव्यजनवति। चामीकरतटेषु सुवर्णनिर्मितवेदिकासु ताडनेनास्फालनेन रणिताः शब्दिता रदना दन्ता यस्य स तस्मिन्। सुरस्रवन्ती मन्दाकिनी तस्या रोधांसि तटानि। ऐरावते इन्द्रमातङ्गे स्वैरं स्वेच्छया रदति सति विलिखति सति। प्रसृता गन्तुं प्रवृत्ता अनेका बह्व्यो विद्याधराभिसारिकाः। "कान्तार्थिनी तु या याति संकेतं साभिसारिका" इत्यमरः। तासां सहस्रं तस्य चरणालक्तकरसेन पादालक्तकद्रवेणानुलिप्त इव कृतानुलेप इव। तारापथे आकाशमार्गे पाटलतां श्वेतरक्ततां प्रकटयति सति प्रकाशयतिसति। तारापथे आकाशमार्गे प्रस्थिता प्रयाता ये सिद्धा देवयोनिविशेषास्तैर्दत्तानि = अर्पितानि यानि दिनकरास्तसमये सूर्यास्तमनकालेऽर्घ्याणि तैरावर्जिते व्याप्ते। रञ्जितककुभि रक्तीकृतदिशि। कुसुम्भभासि कुसुम्भप्रकाशि। पिनाकिप्रणतिः शिवप्रणामस्तया मुदिता हर्षिता विकसितेति यावत्। या सन्ध्या प्रदोषस्तस्याः स्वेदसलिले घर्मजले इव। रक्तचन्दनद्रवे रक्तचन्दनरसे स्रवति क्षरति सति। वन्दारवो नमनशीला ये मुनयो वृन्दा-

कथाभट्टीया

घूमने के लिये प्रवृत्त हुये, चामर से विभूषित तथा सुवर्ण के पत्थरों पर अपने दन्त को रगडने वाले ऐरावत के गंगा के तीर भागों को खोदने पर, इधर उधर जाने वाले हजारों विद्याधरों की अभिसारिकाओं के चरणस्थित लाक्षारस से ही मानो लिप्त आकाशमार्ग के श्वेतरक्तवर्ण होने पर, आकाशमार्ग में जाने वाले सिद्धजनों के सूर्यार्घ से व्याप्त दिशाओं के लालवर्ण को करने वाले, भगवान् शंकरकृत अनुनय से हर्षित संध्या के स्वेद ( पसीना ) के समान स्थित कमण्डलु के समान कान्ति

त्तिकमलसेवागतसकलकमलाकर इव राजति ब्रह्मलोके, समुच्चारित-तृतीयसवनब्रह्मणि ब्रह्मणि, ज्वलितवैतानज्वलनज्वालाजटालाजिरे-ष्वारब्धधर्मसाधनशिबिरनीराजनेष्विव सप्तर्षिमन्दिरेष्वघमर्षणमुषित-किल्बिषविषगदोल्लाघलघुषु यतिषु, सन्ध्योपासनासीनतपस्विपङ्क्तिपूत-पुलिने प्लवमाननलिनयोनियानहंसहासदन्तुरितोर्मिणि मन्दाकिनी-जले, जलदेवतातपत्रे पत्ररथकुलकलत्रान्तःपुरसौधे निजमधुरा-

जयश्रीः

रक्ता देवास्तेषां वृन्दैः समूहैर्वध्यमानं योज्यमानं सन्ध्याञ्जलिबन्धं सन्ध्याञ्जलिस-मूहो यत्र तत्र । ब्रह्मणो विधेरुत्पत्तिर्जन्म यस्मात्तादृशं कमलं पद्मं तस्य सेवार्थं शु-श्रूषार्थमागता आयाताः सकलाः सर्वे कमलाकराः कमलाश्रयाणि सरोवराणि यस्मि-स्तस्मिन् । तादृशे इव ब्रह्मलोके सत्यलोके राजति शोभमाने सति । समुच्चारितं पठितं तृतीयसवने सायंसवने ब्रह्म वेदो येन तस्मिन् । ब्रह्मणि वेधसि सति । ज्व-लितः प्रदीप्तो यो वैतानज्वलनो यज्ञाग्निस्तस्य ज्वालया जटालानि जटाभारसहि-तानि अजिराणि प्राङ्गणानि येषु तेषु । आरब्धानि प्रारब्धानि धर्मसाधनशिबि-रेषु धर्मोपस्कारकस्कन्धावारेषु नीराजनानि नीराजनाख्यशान्तिकर्माणि येषु तेषु । तादृशेष्विव । सप्तर्षिमन्दिरेषु । अघमर्षणेन "ऋतं च सत्यम्" इत्यादि मन्त्रेण मुषितं दूरीभूतमिति यावत्किल्बिषमेव दुरितमेव विषगदो गरलरोगस्तस्योल्लाघं नीरोगताकरणं तेन लघुषु "पापं किल्बिषकल्मषं" इत्यमरः । यतिषु मुनिषु सत्सु । सन्ध्योपसनार्थं सन्ध्योपास्त्यै आसीनोपविशन्ती या तपस्विपङ्क्तिर्मुनिश्रेणिस्तया पूतं पवित्रं पुलिनं तीरं यस्मिंस्तस्मिन् । प्लवमानास्तरन्तो नलिनयोनेर्ब्रह्मणो यानानि वाहनानि हंसा मरालास्तेषां हासेन दन्तुरिता निम्नोन्नता ऊर्मयो वीच-यो यस्य सन्तीति तादृशे । मन्दाकिनीजले आकाशगङ्गाजले । जलदेवतातपत्रे जलदेवताछत्रे । पत्ररथाः पक्षिणस्तेषां कुलं वर्गस्तस्य कलत्राणां स्त्रीणामन्तःपुरसौधे ।

कथाभट्टीया

से युक्त रक्तचन्दन को उराने वाले, नमनशील मुनि व देवतागणों को सन्ध्याञ्जलि कराने वाले, ब्रह्माजी के उत्पादक कमल की सेवा के लिये ही मानो आये हुए अनेक कमलों से ब्रह्मलोक के विराजित होने पर, ब्रह्माजी के सायंकालीन होम के मन्त्रों को पढने पर, धर्म के साधन शिबिरों में नीराजन के समान प्रदीप्त

हिणि सायन्तने तनीयसि निशानिःश्वासनिभे नभस्वति, सङ्कोचोद्भ्रमदुच्चकेसरकोटिसङ्कटकुशेशयकोशकोटरकुटीशायिनि षट्चरणचक्रे, नृत्तोद्धूतधूर्जटिजटाटवीकुटजकुड्मलनिकरनिभे नभस्थलं स्तबकयति तारागणे, संध्यानुबन्धताम्रे परिणमत्तालफलत्वक्त्विषि कालमेघमेदुरे मेदिनीं मीलयति नववयसि तमसि, तरुणतरतिमिरपटलपाटनपटीयसि समुन्मिषति यामिनीकामिनीकर्णपूरचम्पककलिकाकदम्बके प्रदीपप्र-

जयश्रीः

तादृशे । सायंतने सायंकालीने तनीयसि कृशतरे निशानिःश्वासनिभे रात्रिश्वाससमाने नभस्वति वायौ सति । सङ्कोचेन मुकुलीभावेनोद्भ्रमन्ती उद्गच्छन्ती योच्चोन्नता केसरकोटिः किञ्जल्काग्रभागस्तया सङ्कटः सम्बाधो यः कुशेशयकोशः कमलमुकुलस्तस्य कोटरमभ्यन्तरम् । तदेव कुटी गेहं तत्र शायिनि शयाने षट्चरणानां भ्रमराणां चक्रे वर्गे सति । नृत्ते नर्त्तनकाले उद्धूता उत्क्षिप्ता या धूर्जटेः शिवस्य जटैवाटवी काननं तत्र यानि कुटजकुड्मलानि गिरिमल्लिकाकलिकास्तेषां निकरो वर्गस्तन्निभे सदृशे । तारागणे नक्षत्रमण्डले नभःस्थलं तारापथं स्तबकयति सति पुष्पगुच्छवदाचरति सति । सन्ध्यानुबन्धेन सन्ध्याकालसम्बन्धेन ताम्रे रक्तवर्णे परिणमन्ति परिपक्वानि यानि तालफलानि तृणराजफलानि तेषां त्वक्चर्माणि तद्वत् त्विट् कान्तिर्यस्य तत् तस्मिन् । कालमेघवत्प्रलयकालीनजलधरवत् मेदुरे निबिडे । नववयसि प्रत्यग्रे । तमसि अन्धकारे मेदिनीं पृथ्वीं मीलयति सति स्थगयति सति । तरुणतरो नवीनो यस्तिमिरपटलोऽन्धकारसमूहस्तस्य पाटने विदारणे पटीयान् समर्थस्तस्मिन् । यामिन्येव त्रियामैव कामिनी रमणी तस्याः कर्णपूरस्य कर्णावतंसस्य

कथाभट्टीया

के पुष्पों की धूलि से नदी को मलिन करने वाले तथा सिद्धस्त्रियों के केशपाश में स्थित पुष्पों के गन्ध को लेने वाले रात्रि के श्वास के समान सायंकाल में मन्द २ हवा के चलने पर, संकोच के कारण ऊपर की तरफ एकत्रित केसरों के अग्रभाग से निरवकाश कमल के मध्यभागरूपी कुटी में भ्रमरों के शयन करने पर, नृत्य के कारण बिखरी हुई जटाटवी में स्थित वनचमेली के पुष्पों के समान आकाश में तारागण के व्याप्त हो जाने पर, सन्ध्या से रक्तवर्ण होने के कारण परिपक्व तालफल के समानकान्तिवाले प्रलयकालीन मेघों के समान कृष्ण नवीन अन्धकार से पृथ्वी के व्याप्त हो जाने पर, नवीन अन्धकार के भेदन में

करे, प्रतनुतुहिनकिरणकिरणलावण्यालोकपाण्डुन्यश्यानननीलनीरमुक्तकालिन्दीकूलबालपुलिनायमाने शातक्रतवे कशयति तिमिरमाशामुखे, खमुचि मेचकितविचकिलकुवलयसरसि शशधरकरनिकरकचग्रहाविले विलीयमाने मानिनीमनसीव शर्वरीशबरीचिकुरचये चापपक्षतित्विषि तमस्युदिते, भगवत्युदयगिरिशिखरकटककुहरहरिखरनखरनिवहहे-

जयश्रीः

चम्पकस्य हेमपुष्पस्य कलिका कोरकं तस्याः कदम्बके समूहभूते । प्रदीपप्रकरे प्रदीपसमूहे समुन्मिषति प्रादुर्भवति सति । प्रतनवः कृशा ये तुहिनकिरणस्य चन्द्रस्य किरणास्तेषां लावण्यं सौन्दर्यं तस्य लोकेन प्रकाशेन पाण्डुनि श्वेतवर्णे । आश्यानमीषच्छुष्कं नीलं नीलवर्णं च तत् नीरं च जलं च तेन मुक्तं कालिन्दीकूलस्य यमुनातीरस्य बालपुलिनं नवोत्थितं सैकतं तद्वदाचाति । शतं क्रतवो यज्ञा यस्य स शतक्रतुरिन्द्रः स एवाधिष्ठाता यस्य तत् शातक्रतवं तस्मिन । ऐन्द्रे इत्यर्थः । आशामुखे दिङ्मुखे । तिमिरं तमः कशयति सति तनूकुर्वति सति । खमुचि त्यक्ताकाशे । मेचकितं नीलतां नीतं विचकिलानां विकसितानां कुवलयानां नीलोत्पलानां सरो येन तादृशे । शशधरस्य चन्द्रस्य करनिकरः किरणकलापो हस्तनिकरश्च तेन यः कचग्रहः केशाकर्षणं तेनाविले मलिनतां नीते । अन्योऽपि केशाकर्षणेन विलज्जो म्लायति । मानिनीमनसि मानिनीकामिनीचेतसि इव । शर्वरी रात्रिरेव शबरी भिल्ली तस्याश्चिकुराणां केशानां चये समूहे । विलीयमाने विनश्यति सति । चाषपक्षवत् किकीदिविपक्षिपक्षतिवत् त्विट् कान्तिर्यस्य तत् तस्मिन् । तादृशे तमसि तिमिरे उदिते सति उदयगिरेरुदयाचलस्य शिखरं शृङ्गमेव कटकं शिबिरं तस्य कुहरे गह्वरे यो हरिः सिंहस्तस्य खराः कठिना ये नखरनिवहा नखसमूहा एव हेतिरायुधं तया

कथाभट्टीया

निपुण तथा रात्रिरूपी कामिनी के कर्णस्थित चम्पा की कलियों के समान दीपकसमूहों के प्रकाशित होने पर, स्वल्पोदित चन्द्रमा के किरणों की कान्ति से श्वेतवर्ण तथा शुष्क और नील जल से शून्य कालिन्दी के तीर के समान शोभित इन्द्र की दिशा ( पूर्वदिशा ) में अन्धकार के न्यून होने पर, आकाश को छोड़ कर भूमी में व्याप्त विकसित नील कमलों के सरोवरों को अधिक नीले करने वाले चन्द्रमा के किरणों द्वारा केशाकर्षण से मलिन तथा मानिनी स्त्रियों के चित्त में

तिनिहतनिजहरिणगलितरुधिरनिचयनिचितमिव लोहितं वपुरुदयरागाधरमधरमिव विभावरीवध्वा धारयति श्वेतभानौ भगवति चन्द्रमसि, चन्द्रकान्तजलधाराधौत इव ध्वस्ते ध्वान्ते, गोलोकगलितदुग्धनिसरवाहिनि दन्तमयमकरमुखमहाप्रणाल इवापूरयितुं प्रवृत्ते पयोधिमिन्दुमण्डले, स्पष्टे प्रदोषसमये सावित्री शून्यहृदयामिव किमपि ध्यायन्तीं सास्रां

जयश्रीः

निहतस्ताडितो निजहरिणः स्वमृगस्तस्माद् गलितः पतितो रुधिरस्य रक्तस्य निचयो निवहस्तैर्निचितं व्याप्तमिवेत्युत्प्रेक्षा । विभावरीवध्वा रात्रिरमण्या अधरमिव अधरोष्ठमिव । उदये उदयकाले रागो लोहित्यं तस्य धारतामिव धरम् । श्वेतभानौ चन्द्रे लोहितं रक्तं वपुः शरीरं धारयति बिभ्राणे । अचले उदयाचले द्रुतः स्रुतश्चन्द्रकान्तमणिस्तस्य जलधाराभिर्नीरधाराभिर्धौते इव क्षालिते इव । ध्वान्ते तिमिरे ध्वस्ते विनष्टे सति । गोलोकात रश्मिसमूहात्, गलितं पतितं दुग्धं पयस्तस्य विसरः समूहस्तं वहतीति वाहिनि धारके—दन्तमयो हस्तिदन्तमयो यो मकरो मीनस्तस्य मुखमिव मुखमग्रं यस्येति तादृशो महाप्रणालो जलनिःसरणमार्गस्तादृशो इव । इन्दुमण्डले चन्द्रमण्डले पयोधिं समुद्रमापूरयितुं वर्द्धयितुं प्रवृत्ते समुद्युक्ते सति । स्पष्टे स्फुटे प्रदोषसमये रजनीमुखकाले सावित्री शून्यं हृदयं यस्याः सा तां शून्यहृदयामिव मुषितमानसामिव । किमपि ध्यायन्ती

कथाभङ्गीया

ही मानों रात्रि में भ्रमण करने वाली भिल्लनियों के केशपाश में विलीन होने वाले चाषपक्ष के समानकान्तिवाले अन्धकार के उदय होने पर, उदयाचल के शिखर रूपी कैम्पों में स्थित सिंहों के तीक्ष्ण नखायुधों से निहत अपने हरिण के गिरते हुवे रुधिर से ही मानों व्याप्त तथा रात्रिरूपी कामिनी के अधरोष्ठ के समान स्थित उदयकालीन रक्तता को धारण करने वाले भगवान् चन्द्रमा के लाल होने पर, उदयाचल पर झरती हुई चन्द्रकान्त मणियों की जल धारा से धौत होने के कारण ही मानों अन्धकार के नष्ट होने पर, गोलोक ( धेनु या किरण ) से गिरते हुवे दुग्धसमूह को धारण करने वाले तथा हाथी दांत के बने हुवे मकरमुख के जलनिर्गममार्ग के समान स्थित चन्द्रमण्डलद्वारा समुद्र के

सरस्वतीमवादीत्–'सखि, त्रिभुवनोपदेशदानदक्षायास्तव पुरो जिह्वा जिह्रेति मे जल्पन्ती जानास्येव यादृश्यो विसंस्थुला गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः क्षणभङ्गिन्या दुरतिक्रमणीया न रमणीया दैवस्य वामा वृत्तयः । निष्कारणा च निकारकणिकापि कलुषयति मनस्विनोऽपि मानसमसदृशजलादापतन्ती । अनवरतनयनजलसिच्यमानश्च

जयश्रीः

चिन्तयन्तीं सास्रां बाष्पसहितां सरस्वतीमवादीदुवाच । हे सखि ! त्रिभुवनस्य त्रिलोक्या उपदेशदाने शिक्षाप्रदाने दक्षा विदग्धा तस्याः । त्रिलोकीशिक्षणदीक्षिताया इति यावत् । तव पुरोऽग्रे जल्पन्ती व्याहरन्ती मे मम जिह्वा रसना जिह्रेति लज्जामाप्नोति ततस्त्वं जानास्येव वेत्स्येव यादृश्यो दैवस्य वामाः प्रतिकूलाः स्त्रियश्च वृत्तयो व्यापाराः सन्ति । कीदृश्यस्ताः ? विसंस्थुला निर्मर्यादाः । गुणवति गुणयुक्तेऽपि जने मानवे । दुर्जनवत् । निर्दाक्षिण्याः क्रूराः । क्षणे भङ्गो यासां ताः क्षणभङ्गिन्यः प्रतिक्षणविलक्षणाः क्षणमात्रावस्थायिन्यः । अनेन तव शापान्तो भविष्यतीति सूच्यते । दुःखेनातिक्रमणीया दुरभिभवाः । न रमणीया न मनोरमाः । स्त्रियोऽपीदृश्य एव । असदृशोऽयोग्यो जडश्च तादृशात् । आपतन्ती आगच्छन्ती निष्कारणिका निर्हेतुका । निकारस्य परिभवस्य कणिका लेशः । मनस्विनोऽपि धीरस्यापि मानसं चित्तं कलुषयति मलिनीकुरुते । तथा असदृशं च तत् जलं च तस्मात् तथोक्तादसदृशजलाद्विषादेरापतन्ती निर्यान्ती कणिका मानसं सरोऽपि कलुषयति विकुरुते । अनवरतं निरन्तरं यथा तथा नयनजलेना-

कथाभट्टीया

बढ़ने पर, स्पष्ट प्रदोषकाल में सावित्री ने शून्यहृदय चिन्तित अश्रुमुखी सरस्वती को कहा । त्रिभुवन के उपदेश में निपुण तेरे को उपदेश देने में मेरी जिह्वा लज्जित होती है । तू जानती ही है कि–जैसी अरमणीय, निर्मर्याद, क्षणभङ्गुर, अमिट, भाग्य की प्रतिकूल प्रवृत्तियां गुणवान् पुरुष में भी दुर्जन पुरुष के समान क्रूर होती हैं । निष्कारण अयोग्य ( नीच ) पुरुष से किया गया अल्प तिरस्कार भी मनस्वी पुरुषों के मन को मलिन कर देता है । जैसे विष से व्याप्त जल की कणिका मानस सरोवर को भी विकृत बना देती है । जिस प्रकार निरन्तर जलसेक से पत्रशून्य भी वृक्ष अङ्कुरित हो जाता है उसी

तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति । अतिसुकुमारं च जनं सन्तापपरमाणवो मालतीकुसुममिव म्लानिमानयन्ति । महतां चोपरि निपतन्नणुरपि सृणिरिव करिणां क्लेशः कदर्थनायालम् । सहजस्नेहपाशग्रन्थिबन्धनाश्च बान्धवभूता दुस्त्यजा जन्मभूमयः । दारयति दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः, सा नार्हस्येवं भवि-

जयश्रीः

श्रुणा सिच्यमानः आर्द्रीक्रियमाणो विपदो दुःखस्य लवोऽपि लेशोऽपि । तरुरिव वृक्ष इव । सहस्रधानेकधा प्ररोहति प्रादुर्भवति । रोदनेन दुःखं न शाम्यतीति भावः । तरुरपि अनवरतं निरन्तरं नयनं प्रापणं यस्य एतादृशेन जलेन पयसा सिच्यमानः सन् । विगताः पल्लवा यस्यासौ विपल्लवः पत्रहीनोऽपि सहस्रधा प्ररोहति फलति । सन्तापस्य दुःखस्य परमाणवोऽपि लेशा अपि । दुःखलेशा अपीति यावत् । अतिसुकुमारं कोमलतरं जनं मालतीकुसुममिव जातिपुष्पमिव । "सुमना मालती जातिः" इत्यमरः । म्लानि मलिनतामानयन्ति प्रापयन्ति । मालतीकुसुममपि तापलेशेनापि म्लायति । महतामुत्तमानामुपरि निपतन्नागच्छन् । अणुरपि क्लेशः स्वल्पमपि दुःखं सृणिरिवाङ्कुश इव कदर्थनाय पीडनायालं पर्याप्तम् । "अलं भूषणपर्याप्तिशक्तिवारणवाचकम्" इत्यमरः । सृणिपक्षे महतां द्राघीयसां करिणां गजानामुपरि पतन् अणुरपि सूक्ष्मोऽपि । सृणिरङ्कुशः कदर्थनाय पीडनायालं पर्याप्तसाधनम् । उपमालङ्कारः । सहजश्चासौ स्नेहश्च सहजस्नेहः स्वाभाविकप्रेमा स एव पाशस्य ग्रन्थिस्तस्य बन्धनं यासां ताः, सहजस्नेहपाशग्रन्थिबन्धनाः स्वाभाविकप्रणयपाशग्रन्थिनिगडभूताः । बन्धुरेव बान्धवः । बान्धवभूता बन्धुसदृशाः । जन्मभूमयो जनुस्थानानि मातरश्च । दुस्त्यजा दुःखेन त्याज्या भवन्ति । "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति भावः । दारुणस्तीव्रः क्रकचपातः क्राकचस्य । संस्तुतजनस्य परिचितमानवस्य विरहो वियोगः । परिचितमानववियोगः । भव-

कथाभट्टीया

तरह निरन्तर अश्रुप्रवाह से स्वल्प विपत्ति भी बहुत बढ़ जाती है । सन्ताप भी सन्ताप अतिसुकुमार मनुष्य को मालती के पुष्प के समान मलिन कर देता है । हाथी को अङ्कुश के समान मनस्वी पुरुषों के ऊपर पतित दुःख पीड़ा देने का पर्याप्तसाधन होता है । सहजस्नेह से बद्ध बान्धवों के समान जन्मभूमी छोड़नी

तुम् । अभूमिः खल्वसि दुःखक्ष्वेडाङ्कुरप्रसवानाम् । अपि च पुराकृते कर्मणि बलवति शुभेऽशुभे वा फलकृति तिष्ठत्यधिष्ठातरि प्रष्ठे पृष्ठतश्च कोऽवसरो विदुषि, शुचाम् । इदं च ते त्रिभुवनमङ्गलैककमलममङ्गलभूताः कथमिव मुखमपवित्रयन्त्यश्रुबिन्दवः । तदलम् । अधुना कथय

जयश्रीः

स्तवः स्यात् परिचयः" इत्यमरः । क्रकचपात इव करपत्रपात इव । 'क्रकचोऽस्त्री करपत्रम्" इत्यमरः हृदयं मानसं दारयति पाटयति । सा त्वमेवं भवितुं नार्हसि। अनेन प्रकारेण खिन्ना भवितुमयोग्यासि । दुःखमेव विषाद एव क्ष्वेडो गरलम् । "क्ष्वेडस्तु गरलं विषम्" इत्यमरः । तस्याङ्कुराः प्ररोहास्तेषां प्रसवा उत्पत्तयस्तेषाम् । त्वमभूमिरस्थानमसि । अपि च-किं च । बलवति प्रबले पुराकृते पूर्वजन्मविहिते । शुभे श्रेष्ठेऽशुभेऽश्रेष्ठे वा कर्मणि । प्रष्ठेऽग्रगामिनि । "प्रष्ठोऽग्रगामिनि" इति पाणिनिः ८।३।९२। प्रतिष्ठते इति प्रष्ठो गौः अग्रतो गन्ताेत्यर्थः ( सि० कौ० ) । पृष्ठतश्च पश्चादपि वर्तमाने फलं करोतीति फलकृति फलदायके । अधिष्ठातरि नियामके तिष्ठति सति वर्तमाने सति । विदुषि विद्वज्जने शुचां शोकानां कोऽवसरः कः समयः । "यादृशं कुरुते कर्म तादृशं फलमश्नुते" इति रामायण उत्तरकाण्डे ( १९।२३ ) । कृतस्य कर्मणः फलं प्राप्यमेव तत्र विदुषां का चिन्तेति भावः । त्रयाणां भुवनानां समाहारस्त्रिभुवनं तस्य मङ्गलं तदर्थमेकं केवलं कमलं पद्मभूतं त्रिभुवनमङ्गलैककमलं त्रिलोकीमङ्गलजनकैकपद्मम् । इदं दृश्यमानं ते मुखमाननम् । अमङ्गलभूता अमङ्गलकारिणः अश्रुबिन्दवो बाष्पकणाः कथमिवापवित्रयन्ति कलुषीकुर्वते । अपवित्रतां नयन्ति न तु शोभां स्थापयन्तीति भावः । तत्तस्मात्कारणात् । अलं शोकेनेति शेषः । अधुना साम्प्रतम् । भुवो भूलोकस्य

कथाभट्टीया

नहीं जा सकती है । परिचित पुरुषों का वियोग तीव्र करपत्र ( करोत ) के समान हृदय को विदीर्ण कर देता है । तू इस प्रकार दुःखी होने के योग्य नहीं है । तू दुःखरूपी विष के अङ्कुरों की उत्पत्ति का स्थान नहीं है । पूर्वजन्म के शुभ वा अशुभ कर्मों के फल को देने वाले अधिष्ठाता की उपस्थिति से शुभ वा अशुभफल मिलने पर विद्वान् पुरुष दुःख नहीं करते । त्रिभुवन के मङ्गलकारक तेरे मुख को अमङ्गलसूचक अश्रुबिन्दु वे क्योंकर अपवित्रित करती हैं । अतः

कतमं भुवो भागमलङ्कर्तुमिच्छसि । कस्मिन्नवतितीर्षति ते पुण्यभाजि प्रदेशे हृदयम् । कानि वा तीर्थान्यनुग्रहीतुमभिलषसि । केषु वा धन्येषु तपोवनधामसु तपस्यन्ती स्थातुमिच्छसि । सज्जोऽयमुपचरणचतुरः सहपांसुक्रीडापरिचयपेशलः प्रेयान्सखीजनः क्षितितलावतरणाय । अनन्यशरणा चाद्यैव प्रभृति प्रतिपद्यस्व मनसा वाचा क्रियया च सर्वविद्याविधातारं दातारं च श्वःश्रेयसस्य चरणरजःपवित्रितत्रिदशासुरं

जयश्रीः

कतमं भागं प्रदेशमलङ्कर्तुं भूषयितुं स्वनिवासेनेति शेषः । इच्छसि समीहसे इति त्वं कथय वद । पुण्यभाजि पवित्रतासेविनि कस्मिन् प्रदेशे भूभागे ते तव हृदयं मानसम् । अवतरितुमिच्छति अवरोढुमिच्छति । वा विकल्पे । कानि तीर्थानि तीर्थस्थानानि प्रयागादीनि । अनुग्रहीतुमनुकम्पितुं जन्मनेति शेषः । अभिलषसि समीहसे । केषु धन्येषु धन्यवादार्हेषु तपोवनानां धामसु स्थानेषु तपस्यन्ती तपश्चरन्ती स्थातुं निवसितुमिच्छसि समीहसे । उपचरणे सेवायां चतुरो दक्षः । सहपांसुक्रीडा बाल्यकाले धूलिकेलिसाहचर्यम् । तस्य परिचयः संस्तवस्तेन पेशलो मनोहरः । सहबालक्रीडासंस्तवमनोरमः । अयमसौ प्रेयान् स्नेहवान् । सखीजनः सहचरीजनः । क्षितितले भूतले यदवतरणं गमनं तस्मै भूलोके गमनाय । सज्जो बद्धपरिकरः । आस्ते । नास्ति अन्यं शरणं रक्षकं यस्याः सानन्यशरणा तन्मात्रतत्परा । त्वमद्यैव,प्रभृति त्र्यम्बकं महादेवं प्रतिपद्यस्व प्राप्नुहि । कीदृशं तम् । सर्वासां विद्यानां ज्ञानानां विधातारं कर्तारम् । श्वःश्रेयसस्य कल्याणस्य दातारं समर्पकम् । चरणरजसा पादधूल्या पवित्रिताः पावनीकृतास्त्रिदशा देवा असुराश्च दैत्याश्च येन

कथाभट्टीया

दुखः को छोड़ और कहो कि किस भूप्रदेश को अलंकृत करना चाहती हो । किस पवित्र प्रदेश में तुम्हारा हृदय उतरना चाहता है । किन तीर्थों पर अनुग्रह करना चाहती हो । किन पवित्र धन्य तपोवनों में तपस्या के लिये निवास करोगी । सेवा में चतुर तथा बाल्यकालीन क्रीडा का बन्धु तेरा प्रिय सखीजन ( अर्थात् मैं ) भूलोक में जाने के लिये तैयार है । अनन्य भक्ति से तू आज से ही सब विद्याओं का विधाता, कल्याण के दाता, अपने चरण रज से देव और दानवों को पवित्र करने वाले तथा चन्द्रमा की कला से अपने कर्णों को अलंकृत

सुधासूतिकलिकाकल्पितकर्णावतंसं देवदेवं त्रिभुवनगुरुं त्र्यम्बकम्। अल्पीयसैव कालेन स ते शापशोकविरतिं वितरिष्यति' इति।

एवमुक्ता मुक्तमुक्ताफलधवललोचनजललवा सरस्वती प्रत्यवादीत्-'प्रियसखि, त्वया सह विचरन्त्या न मे काञ्चिदपि पीडामुत्पादयिष्यति ब्रह्मलोकविरहः शापशोको वा। केवलं कमलासनसे-

जयश्रीः

स तम्। पादधूलिपावनीकृतदेवदैत्यमिति यावत्। सुधामृतं सूयतेऽनेनेति सुधासूतिश्चन्द्रस्तस्य कलिका तरिका कलेति यावत्। तया कल्पितो विरचितः कर्णावतंसः कर्णाभरणं येन स तं तथोक्तम्। चन्द्रकलानिर्मितकर्णाभरणमिति यावत्। देवानामपि देवम्। त्रिभुवनगुरुं जगत्त्रयपूज्यम्। त्र्यम्बकं शङ्करम्। "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्" इति श्रुतिः। मनसा चित्तेन। वाचा वाण्या। कर्मणा च प्रतिपद्यस्व प्राप्नुहि। अल्पीयसैव लघीयसैव कालेन समयेन। स त्र्यम्बको देवः। ते तव शापशोकस्य शापदुःखस्य विरतिं विरामं वितरिष्यति दास्यति।

एवमिति—एवमनेन प्रकारेणोक्ताभिहिता सती मुक्तास्त्यक्ता, मुक्ताफलवत् मौक्तिकवत् धवलाः श्वेतवर्णा लोचनजलस्याश्रुणो लवा बिन्दवो यया सा तथोक्ता। त्यक्तमौक्तिकवत्सितनेत्रजलबिन्दुः। सरस्वती देवी प्रत्यवादीदुवाच। हे प्रियसखि! प्रियसुहृत्! ब्रह्मलोकविरहः सत्यलोकवियोगः शापशोको वा त्वया सह सावित्र्या साकं विचरन्त्या गच्छन्त्या मे मम काञ्चिदपि पीडां दुःखं नोत्पादयिष्यति न जनयिष्यति। केवलं कमलासनस्य कमलयोनेर्ब्रह्मणः सेवासुखं शुश्रू-

कथाभट्टीया

करने वाले भगवान् शंकर की मन से वचन से तथा कर्म से सेवा कर। यह भगवान् शंकर थोड़े ही काल में तेरे शाप का अन्त कर देंगे। यह सब सुन कर मोतियों के समान श्वेत अश्रुओं को बहाती हुई सरस्वती ने कहा हे प्रियसखि? तेरे साथ में मुझ को ब्रह्म लोक का वियोग तथा शाप जन्य शोक पीडा कुछ भी नहीं होगी। केवल ब्रह्मा जी की सेवा का सुख मुझे पीड़ित करता है। और भूमि में योग के योग्य, समाधि के योग्य पवित्र स्थान तू स्वयं ही जानती है यह कह कर चुप हो गई। इत्यादि विचारों से जगती हुई सरस्वती ने रात्रिभर नेत्रों को भी नहीं निमीलित किया और रात्रि को व्यतीत की। दूसरे

वासुखमार्द्रयति मे हृदयम् । अपि च त्वमेव वेत्सि मे भुवि धर्मधामानि समाधिसाधनानि योगयोग्यानि च स्थानानि स्थातुम्' इत्येवमभिधाय विरराम । रणरणकोपनीतप्रजागरा चानिमीलितलोचनैव तां निशामनयत् ।

अपरेद्युरुदिते भगवति त्रिभुवनशेखरे खणखणायमानस्खलत्खलीनक्षतनिजतुरगमुखक्षिप्तेन क्षतजेनेव पाटलितवपुष्युदयाचलचूडामणौ जरत्कृकवाकुचूडारुणारुणपुरःसरे विरोचने नातिदूरवर्ती विवि-

जयश्रीः

पानन्दो मे मम हृदयं मानसमार्द्रयति स्नेहयति । अपि च मे धर्मधामानि धर्मस्थानानि समाधिसाधनानि चित्तैकाग्र्यनिमित्तानि । समाधेरष्टावङ्गानि-"यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि" योगसूत्रे (२।२९)। योग्यायोग्यानि मे मम स्थानानि धामानि स्थातुं त्वमेव वेत्सि जानासि । इत्येवमभिधाय कथयित्वा विरराम तस्थौ । रणरणकेनोत्कण्ठयोपनीतः प्रापितः प्रजागरः प्रबोधो यस्याः सा । उत्कण्ठाप्रापितप्रबोधेति यावत् । अनिमीलितेऽनिद्रिते लोचने नेत्रे यस्याः सा । अनिद्रितनेत्रेति यावत् तां निशां रात्रिमनयत् यापयामास ।

अपरेद्युरिति—अपरेद्युरन्येद्युः । भगवति विरोचने सूर्ये । उदिते उदयं गते सति कीदृशे विरोचने ? त्रिभुवनस्य जगत्त्रयस्य शेखरे मौलिभूते खणखणायमानं खणखणेति शब्दायमानम्, स्खलत् पतत् यत्खलीनं कविका तेन क्षता विद्धा ये निजतुरगाः स्वीयाश्वास्तेषां मुखेभ्यो वदनेभ्यः क्षिप्तेन पतितेन । खणखणशब्दायमानपतत्कविकाविद्धनिजाश्ववदनपतितेनेति यावत् । क्षतजेन रुधिरेणेव पाटलितं श्वेतरक्तं वपुः शरीरं यस्यासौ तस्मिन् । उदयाचलस्य उदयपर्वतस्य चूडामणौ शिरोमणौ जरन् वृद्धो यः कृकवाकुः कुक्कुटस्तस्य चूडा मांसमयी शेखरिका तद्वदरुणो रक्तवर्णो योऽरुणः सूर्यसारथिः स पुरःसरोऽग्रेसरो यस्य स

कथाभट्टीया

दिन त्रिलोकी के मुकुटभूत, खण खण करने वाली लगाम ( कविका ) के प्रहार से निकला हुआ अपने अश्वों के मुख के रुधिर से ही मानो लाल शरीर वाले, उदयाचल के चूडामणि, वृद्ध अरुणशिख ( मुर्गा ) की शिखा के समान रक्त

ऽय पितामहविमानहंसकुलपालः पर्यटन्नपरवक्त्रमुच्चैरगायत्—

'तरलयसि दृशं किमुत्सुकामकलुषमानसवासलालिते ।
अवतर कलहंसि वापिकां पुनरपि यास्यसि पङ्कजालयम्' ॥२२॥

जयश्रीः

तस्मिन् । जरठकुक्कुटशिखारक्तसूर्यसारथिपुरःसरे इति यावत् । "कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः" इत्यमरः । "कृकेण शिरोग्रीवेण वक्ति कृकवाकुः" इति क्षीरस्वामी । विरोचने सूर्ये समुदिते । नातिदूरवर्ती समीपस्थो विविच्य विचार्य । पितामहस्य ब्रह्मणो विमानभूतानि व्योमयानजातानि हंसकुलानि मरालसमूहास्तस्य पालो रक्षकः । ब्रह्मविमानमरालकुलरक्षकः इति यावत् । पर्यटन् गच्छन् । अपरवक्त्रमेतदाख्यं छन्दः । 'अयुजि ननरला गुरुः, समेन्जमपरवक्त्रमिदं ततो जरौ" इति तल्लक्षणं वृत्तरत्नाकरे । उच्चैरगायत् अवादीत् ।

अधुना कविरन्योक्तिमुखेन सरस्वतीमाश्वासयति तरलेत्यादिना—अकलुषं निर्मलं मानसं मानसं सरोवर इति अकलुषमानसं तस्मिन् वासेन निवासेन लालिता विनोदिता तत्सम्बुद्धौ हे अकलुषमानसवासलासिते निर्मलमानससरोवरनिवासशोलिते ! कलहंसि राजहंसि ! उत्सुकां समुत्कण्ठितां दृशं दृष्टिं किं तरलयसि चञ्चलीकुरुषे । मानससरोवरत्यागेन किमर्थं खिद्यसे इति भावः । हे कलहंसि ! त्वं वापिकां दीर्घिकामवतर गच्छ । मानससरो विहायेति शेषः । यतः पुनरपि पङ्कजानां पद्मानामालयं निवासं कमलाकरं मानसं सर इति भावः । यास्यसि गमिष्यसि । अतस्त्वया न विमनायितव्यमिति हंसीं प्रत्यन्योक्तिः । अत्राप्रस्तुतप्रशंसालङ्कारः । यत्राप्रस्तुतेनावर्ण्येन प्रस्तुतस्य वर्णनीयस्यार्थस्य प्रतीतिर्भवेत् साऽप्रस्तुतप्रशंसा । यथा चन्द्रालोके—"अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुतानुगा" (५।६४) अत्राप्रस्तुतेन हंसीरूपार्थेन प्रस्तुतस्य सरस्वतीरूपार्थस्य प्रतीतिर्जायत इति तल्लक्षणसङ्गतिः । तथा चायं सरस्वतीरूपार्थः—अकलुषं निर्मलं मानसं चित्तं यस्यासौ

कथाभट्टीया

सारथि वाले भगवान् सूर्य के उदित होने पर समीपस्थित, पितामह के वाहन हंसों का पालक पुरुष ने विचार के साथ सरस्वती के सामने यह गायन किया । तरलेति । कवि अन्योक्ति के कथन से सरस्वती को आश्वासन देता है । निर्मलमानससरोवर में निवास करने वाली हे कलहंसि ! व्यर्थ ही क्यों उत्कण्ठा से

तच्छ्रुत्वा सरस्वती पुनरचिन्तयत्—'अहमिवानेन पर्यनुयुक्ता । भवतु । मानयामि मुनेर्वचनम्' इत्युक्त्वोत्थाय कृतमहीतलावतरण-

जयश्रीः

अकलुषमानसो ब्रह्मा तस्मिन् वासो निवासस्तेन लालिते विनोदिते सरस्वति ! उत्सुकां समुत्कां दृशं नेत्रं किमर्थं तरलयसि चञ्चलीकुरुषे ब्रह्मसहवासत्यागभयेन किमाकुलीभवसीति भावः । उप्यन्तेऽस्यां तानि कर्माणीति वापिका मर्त्यभूमिस्ता-मवतर गच्छ त्वम् । पुनरपि पङ्कजमेव कमलमेवालयमासनं यस्यासौ तं कमला-सनं ब्रह्माणं यास्यसि गमिष्यसि । का तव चिन्तेति भावः । यत्त्वत्र कैश्चिद्द्रौडैः "अकलुषमानसवासलालिते" इत्यस्य पदस्य "सरस्वति" इत्यर्थोद्घाटने बहु परा-क्रान्तम् । परन्त्वस्माकं मते तदनावश्यकमेव । तथा हि—प्रकरणादेव सरस्वतीत्य-र्थोऽवगम्यत एव । अवगतस्यैव पुनरपि वाच्यतापादनमकिञ्चित्करमेव । वस्तु-तस्तु—"अकलुषमानसवासलालिते" इति पदं सरस्वत्या विरिञ्चिवल्लभात्वम् , वि-रिञ्चिचेतोनिवासलालितत्वं च बोधयति । शापप्रसङ्गेन च सरस्वत्या ब्रह्मलोका-च्च्युतिः, अत एव चौत्कण्ठ्यं साधु सङ्घटते । या पूर्वमकलुषमानसवासलालिता-सीत्सैवेदानीं त्वं वापिका मवतरेति कलहंसीरूपकेण सरस्वतीमुद्दिश्यैव पितामह-विमानहंसकुलपालस्यैव वचनप्रवृत्तेः । "अकलुषमानसलालिते" इत्यस्य स्फुटंस र-स्वतीरूपार्थत्वे त्वप्रस्तुतप्रशंसालङ्कारस्यापि हानिः स्यात् । ततोऽस्मन्मतमेव ज्यायः । अपरवक्त्रं छन्दः ॥ २२ ॥

पद्यमिदं श्रुत्वा निशम्य सरस्वती शारदा पुनरचिन्तयत् चिन्तितवती । अनेन वचनेन । अहमेव पर्यनुक्तोपपत्त्या बोधिता । भवतु =अस्तु । मुनेः ऋषेर्वचनं वा-क्यं मानयामि भूलोकं गमिष्यामीति भावः । इत्युक्त्वा वदित्वोत्थाय, कृतो वि-

कथाभट्टीया

दृष्टि को चञ्चल बनाती है । तुम वापिका में चली जावो । पुनः तुम इस मानस सरोवर में आजावोगी । सरस्वती के पक्ष में यह अर्थ है अकलुषमानस (निर्मल-चित्त) ब्रह्माजी के सहवास से प्रसन्न हे सरस्वती ! तुम व्यर्थ ही उत्कण्ठा से दृष्टि को चञ्चल करती हो । तुम शुभाशुभ कर्म के उत्पादक ( वापिका ) भूलोक में जावो । पुनः तुम पङ्कजालय ( ब्रह्माजी ) को प्राप्त करोगी ॥ २२ ॥

यह सुनकर सरस्वती ने विचार किया कि "इस अन्योक्तिद्वारा मुझे ही बोध कराया

सङ्कल्पा परित्यज्य वियोगविक्लवं स्वपरिजनं ज्ञातिवर्गमविगणय्या-वगणा त्रिः प्रदक्षिणीकृत्य चतुर्मुखं कथमप्यनुनयनिवर्तितानुयायिव्रतिव्राता ब्रह्मलोकतः सावित्रीद्वितीया निर्जगाम।

(१)ततः क्रमेण ध्रुवप्रवृत्तां धर्मधेनुमिवाधोधावमानधवलपयोधराम्,

जयश्रीः

हितो महीतले भूतलेऽवतरणस्यावरोणहस्य सङ्कल्पो निश्चयो यया सा। तथोक्ता विहितभूतलगमननिश्चयेति यावत्। वियोगेन विरहेण विक्लवं खिन्नं स्वपरिजनं निजसेवकवर्गं परित्यज्य विहाय। ज्ञातिवर्गं स्वजातिसमूहमवगणय्यानाकलय्य। अवगणा सावित्रीं विना नान्यपरिजना। चतुर्मुखं ब्रह्माणं त्रिस्त्रिवारं प्रदक्षिणीकृत्य परिक्रम्य कथमपि केनापि प्रकारेण अनुनयेन सान्त्वनेन निवर्तिताः परावर्तिताः अनुयायिनामनुगामिनां व्रतिनां तपस्विनां व्राताः समूहा यया सा। तथोक्ता सान्त्वनपरावर्तितानुगामितपस्विसमूहेति यावत्। ब्रह्मलोकतः सत्यलोकतः सावित्रीद्वितीया सावित्रीसहिता निर्जगाम निर्ययौ।

अधुना कविर्मन्दाकिनीवर्णनमारभते—तत इत्यादिना—

ततस्तदनन्तरम्। क्रमेण मन्दाकिनीमनुसरन्ती सरस्वती मर्त्यलोकमवततारेति सम्बन्धः। कीदृशीं मन्दाकिनीम्। ध्रुवं नित्यं वियत्। तस्मात्प्रवृत्ताम्। ध्रुवस्तारकविशेषस्तस्मात्प्रवृत्ताम्। विष्णोर्वा ध्रुवावूरू ध्रुवे वा सक्थिनी तयोः प्रकर्षेण वृत्तां परिवर्तुलां वा धर्माय धेनुस्तामिव होमधेनुमिव कामधेनुमिवेति वा। अत्रोपमा श्लेषानुप्राणिता। अधो धावमानाऽधोलम्बमाना धवलाः सिताः पयोधरा मेघा यस्याः सा ताम्। धेनुपक्षे—अधोधावामाना धवला सिता पयसां धराः पयो-

कथाभट्टीया

गया है। अस्तु मैं मुनि का वचन मानूंगी" यह कह कर उठ खडी हुई और भूमण्डल में जाने का संकल्प कर के वियोग से दुःखी अपने परिजन को छोड कर बन्धुवर्ग की अवहेलना करके सावित्रीसहित ब्रह्मा जी के तीन प्रदक्षिणा कर के अनुनय से सब अनुयायी तपस्वियों के वापिस भेज कर ब्रह्म लोक से रवाना हो गई। इसके अनन्तर क्रम से आकाश से निकली हुई धर्मधेनु (कामधेनु) के समान नीचे वर्तमान धवल मेघों (धेनु पक्ष में स्तनों) से शोभित, कलकलशब्द करती

(१) एतदन्तर्गतोऽशः साहित्यमध्यमापरीक्षाबहिर्भूतः।

उद्धुरध्वनिमन्धकमथनमौलिमालतीमालिकाम्, आलीयमानवालखिल्यरोधसमरुन्धतीधौततारवत्वचम्, त्वङ्गत्तुङ्गतरङ्गतरत्तरलतरतारतारकाम्, तापसवितीर्णतरलतिलोदकपुलकितपुलिनाम्, आप्लवनपूतपितामहपातितपितृपिण्डपाण्डुरितपाराम्, पर्यन्तसुप्तसप्तर्षिकुशशयनसूचितसूर्यग्रहसूतकोपवासाम्, आचमनशुचिशचीपतिमुच्यमाना-

जयश्रीः

धराः स्तनाः यस्याः सा ताम् । उद्धुरध्वनिमुद्दटशब्दाम् । अन्धकमथनस्य शङ्करस्य मौलौ शिरसि मालतीमालिका तां जातिपुष्पस्रजमिवेति रूपकालङ्कारः । आलीयमानाः श्लिष्यन्तो वालखिल्या मुनिविशेषास्तै रुद्धं गृहीतं रोधस्तटं यस्याः सा ताम् । अरुन्धत्या वसिष्ठपत्न्या धौता क्षालिता तरोरियं तारवा वार्क्षी त्वक् चर्म यस्यां सा तथोक्ताम् । त्वङ्गन्तश्चलन्तो ये तुङ्गा उन्नताः, तरङ्गा ऊर्मयस्तेषु तरलतराश्चञ्चलतराः, तारा महत्यस्तारका नक्षत्राणि यस्यां सा । तापसैर्मुनिभिर्वितीर्णानि दत्तानि तरलानि चञ्चलानि यानि तिलोदकानि तिलमिश्राणि नीराणि तैः पुलकितं रोमाञ्चितं पुलिनं तीरं यस्याः सा ताम् । तिलोदकदानेन पितरस्तृप्यन्ते। यथाह मनुः—"अवकाशेषु चोक्षेषु नदीतीरेषु चैव हि । विविक्तेषु च तुष्यन्ति दत्तेन पितरः सदा ॥ तेषामुदकमानीय सपवित्रांस्तिलानपि । अग्नौ कुर्यादनुज्ञातो ब्राह्मणो ब्राह्मणैः सह ॥ इति (३ अ० २०७,२१०) । आप्लवनेन स्नानेन पूतः पवित्रीभूतो यः पितामहो ब्रह्मा तेन पातिता दत्ताः पितृभ्यः अग्निष्वात्तादिभ्योऽर्पिताः पिण्डास्तैः पाण्डुरितः श्वेतवर्णीकृतः पारस्तीरं यस्याः सा । पितॄनुद्दिश्य यत्र पिण्डाः प्रदीयन्ते तत्कर्म पिण्डपितृयज्ञं श्रौतम् । पितरो देवविशेषाः । यथाह मनुः—"अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः । न्यस्तशस्त्रा महाभागा पितरः पूर्वदेवताः" । इति ( ३ अ० १९२ श्लो० ) । पर्यन्तेषु प्रान्तेषु सुप्ता निद्रिता ये सप्तर्षयो विश्वामित्रादयस्तेषां कुशा दर्भा एव शयनानि शय्यास्तैः सूचितो ज्ञापितः

कथाभट्टीया

हुई, शंकर के मस्तक पर विराजमान मालती-माला के समान सुन्दर, तट पर स्थित वालखिल्य मुनियों से अलंकृत, अपने वस्त्रों को धोती हुई अरुन्धती से युक्त, चञ्चल तरङ्गों में प्रतिबिम्बित नक्षत्रों से भूषित, तपस्वियों से दी गई तिलाञ्जलियों से व्याप्त तीरभूमि से संयुक्त, स्नान से पवित्र पितामह द्वारा दिये

र्चनकुसुमनिकरशाराम्, शिवपुरापतितनिर्माल्यमन्दारदामकामनादरदारितमन्दरदरीदृषदम्, अनेकनाकनायकनिकायकामिनीकुचकलशविलुलितविग्रहाम्, ग्राहग्रावग्रामस्खलनमुखरितस्रोतसम्, सुषुम्णास्रुतशशिसुधाशीकरस्तबकतारकिततीराम्, धिषणाग्निकार्यधूमधूसरितसैकतां, सिद्धविरचितवालुकालिङ्गलङ्घनत्रासविद्रुतविद्या-

जयश्रीः

सूर्यग्रहणस्य राहुग्रस्तदिवाकरस्य सूतकेनाशौचेनोपवासोऽनशनं यस्यां सा । ग्रहणे उपवासो विधेय इति धर्मसिन्धौ प्रथमपरिच्छेदे उक्तम् । 'त्रिरात्रमेकरात्रं वा समुपोष्य ग्रहणे स्नानदानाद्यनुष्ठाने महाफलम्, एकरात्रपक्षे ग्रहणदिनात्पूर्वदिने उपवास" इति केचित्, "ग्रहणसम्बन्धाहोरात्र उपवास इत्यपरे" । निर्णयसिन्धौ—"सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत श्रृतमन्नं विवर्जयेत्" इति हेमाद्रौ षट्त्रिंशन्मतात् ( प्रथमपरिच्छेदे ) । कृतोपवासः कुशशयने शयीतेति धर्मसिन्धौ—"तृणतटाकास्तीर्णभूमौ पृथक् शयीरन् कम्बलाद्यास्तीर्णभूमौ" इति ( तृतीयपरिच्छेदे ) । आचमनेन जलपानेन न तु पितामहवत्स्नानादिनिष्ठात्वमस्योच्यते । अत एव शचीपदेन सम्भोगासक्तत्वमिव पोषितम् । शुचिः शुद्धो यः शचीपतिस्तेन मुच्यमानानि प्रक्षिप्यमाणानि अर्चनाय पूजनाय कुसुमानि पुष्पाणि तेषां निकरेण समूहेन शारा विचित्रा ताम् । शिवपुरात्कैलासात्पातितं प्रक्षेपितं निर्माल्यं शिवाय निवेदितं मन्दारस्य देवतरोर्दामकं पुष्पमाला यस्यां सा तथोक्ता ताम् । अनादरेणावहेलया दारिता विपाटिता मन्दरदरीणां मन्दराचलगुहानां दृषत् शिला यया सा ताम् । अनेकेषां बहूनां नाकनायकानां देवानां निकायस्य समूहस्य कामिन्यो रमण्यस्तासां कुचावेव कलशावेव ( रूपकालङ्कारः ) ताभ्यां

कथाभट्टीया

गये पिण्ड दान से व्याप्त तीर प्रदेश से युक्त, प्रान्त भाग में सुप्त सप्तर्षियों की दर्भशय्या से सूर्यग्रहण उपवास को सूचित करने वाली, आचमन से शुद्ध इन्द्र से भेंट किये गये पुष्पों से विचित्र, कैलास से फेंके गये शिव निर्माल्य पुष्पों से व्याप्त, अनायास से मन्दराचल की गुहा की शिलाओं को विदीर्ण करने वाली, अनेक देवस्त्रियों के कुचकलशों से चञ्चल जल से युक्त, ग्राह और प्रस्तरों के स्खलन से कलकल प्रवाह वाली, सूर्य की सुषुम्णानामक किरण से निकली हुई चन्द्रमा की सुधा ( अमृत ) के स्तबकों को नक्षत्रों के समान दिखाने वाली, बृहस्पति के

धराम्, निर्मोकमुक्तिमिव गगनोरगस्य, लीलाललाटिकामिव त्रिविष्टपविटस्य, विक्रयवीथीमिव पुण्यपण्यस्य, दत्तार्गलामिव नरकनगरद्वारस्य, अंशुकोष्णीषपट्टिकामिव सुमेरुनृपस्य, दुगूलकदलि-

जयश्रीः

विलुलितो विक्षिप्तो विग्रहः शरीरं यस्याः सा ताम् । ग्राहाणां जलजन्तूनां ग्रावग्रामाणां प्रस्तरसमूहानां स्खलनेनास्फालनेन मुखरितं शब्दायमानं स्रोतः प्रवाहो यस्याः सा ताम् । सुषुम्णोऽर्ध्वगमिनो रवेरमृतमयो रश्मिः । तया स्नुता निःसृता शशिनश्चन्द्रस्य सुधा अमृतं तस्याः—शीकरस्तबकाः बिन्दुगुच्छास्तैस्तारकितं सञ्जाततारकं तीरं पुलिनं यस्याः सा तां तथोक्ताम् । "अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यमादित्योऽस्य दीप्तिर्भवति । सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवति" ( निरुक्ते २।२।२ ) । योगिनोऽपि सुषुम्णामार्गेणैवामृतपानं कुर्वन्ति । "अर्काद्विनिःसृतः प्राचीं यद् यात्यहरहः शशी" इति वचनाच्चन्द्रः सूर्यादुत्पन्नः । धिषणस्य बृहस्पतेर्यदग्निहोत्रादि तस्य धूमेन धूसरितं मलिनीभूतं सैकतं पुलिनं यस्याः सा ताम् । सिद्धैर्देवयोनिविशेषैर्विरचितानि निर्मितानि यानि वालुकालिङ्गानि पार्थिवलिङ्गानि तेषां लङ्घनमतिक्रमणं तस्य त्रासेन भयेन विद्रुता धाविता विद्याधरा देवयोनिभेदा यस्यां सा । गगनमाकाशमेवोरगस्तस्य तथोक्तस्य । रूपकालङ्कारः । ये निर्मोकमुक्तिमिव सर्पकञ्चुकत्यागमिवेत्युत्प्रेक्षा । त्रिविष्टपमेव त्रिदिवमेव विटो धूर्तस्तस्य । लीलार्थं विलासार्थं ललाटिकामिव भालभूषणमिवेत्युत्प्रेक्षा । पुण्यमेव सुकृतमेव पण्यं विक्रेयद्रव्यम् । तस्य विक्रयवीथिमिव विक्रयस्थानमिव । नरकनगरस्य नरकलोकस्य द्वारं तस्य । दत्ता योजिता अर्गला द्वाररोधकदण्डो यया सा ताम् । सुमेरुपर्वत एव नृपस्तस्य ।

कथाभट्टीया

अग्नि होत्रों की धूम से मलिन तीर वाली, सिद्धों से बनाये गये पार्थिवलिङ्गों के लङ्घन के भय से विद्याधरों को भगानेवाली, आकाशरूपी सर्प की कञ्चुकी के समानस्थित, स्वर्गरूपी विलासीपुरुष के ललाट भूषण के समान शोभित, पुण्यरूपी पदार्थ के विक्रय स्थान के समान स्थित, नरक नगर द्वार की अर्गला स्वरूप, सुमेरुरूपी राजा की उत्तम उष्णीष की तरह विराजित, कैलासरूपी हाथी की पताका के समान सुन्दर, मोक्ष के मार्ग के समान स्थित, कृतयुग की नेमिके

कामिव कैलासकुञ्जरस्य, पद्धतिमिवापवर्गस्य, नेमिमिव कृतयुगस्य, सप्तसागरराजमहिषीं मन्दाकिनीमनुसरन्ती मर्त्यलोकमवततार। ) अपश्यच्चाम्बरतलस्थितैव हारमिव वरुणस्य, अमृतनिर्झरमिव चन्द्राचलस्य, शशिमणिनिष्यन्दमिव विन्ध्यस्य, कर्पूरद्रुमद्रवप्रवाहमिव दण्डकारण्यस्य, लावण्यरसप्रस्रवणमिव दिशाम्, स्फाटिकशिलापट्टशयनमिवाम्बरश्रियाः, स्वच्छशिशिरसुरसवारिपूर्णं भगवतः पिता-

जयश्रीः

अंशुकं सूक्ष्मवसनं तस्योष्णीपपट्टिकामिव शिरोवेष्टनपट्टिकामिव। कैलासपर्वत एव कुञ्जरो हस्ती तस्य दुगूलकदलिकामिव दुकूलवस्त्रनिर्मितवैजयन्तीमिव। अपवर्गस्य मोक्षस्य पद्धतिमिव सरणिमिव। कृतयुगस्य सत्ययुगस्य नेमिमिव चक्रधारामिव। सप्तानां सागराणां लवणोदक्षीरोदादीनां समुद्राणां राज्ञां महिषीमिव पट्टराज्ञीमिव। मन्दाकिनीं वियद्गङ्गामनुसरन्ती अनुगच्छन्ती मर्त्यलोकं भूलोकमवततारावरुरोहाजगामेति भावः।

सा सरस्वती शोणं महानदमम्बरतलस्थितैवापश्यदिति सम्बन्धः। कीदृशं नदम्? वरुणस्य जलाधिपस्य हारमिव मौक्तिकमालामिव। चन्द्र एवाचलः पर्वतः ( रूपकालङ्कारः )। यद्वा चन्द्राख्यः पर्वतो यतोऽयं शोणनदो निःसृतः। तस्य। अमृतस्य सुधाया निर्झरस्तमिव प्रवाहमिव। अत्रोत्प्रेक्षा। विन्ध्यस्य विन्ध्याचलस्य। शशिमणिश्चन्द्रकान्तमणिस्तस्य निष्यन्दमिव निर्झरमिव। दण्डकारण्यस्य दण्डकाख्यवनस्य। कर्पूरद्रुमाणां कर्पूरवृक्षाणां द्रवस्य रसस्य प्रवाहस्तमिव धारामिव। दिशामाशानां लावण्यं मधुरिमा तस्य रसो द्रवस्तस्य प्रस्रवणमिव प्रवाहमिव। माधुर्यद्रवप्रवाहमिवेति यावत्। अम्बरश्रिया आकाशलक्ष्म्याः। स्फाटिकं स्फटिकमणिनिर्मितं शिलापट्टं दृषत्पट्टं तदेव शयनं शय्या तमिव। स्वच्छं च तत् शिशिरं शीतं सुरसं च सुस्वादु यद्वारि जलं तेन पूर्णं भृतम्। निर्मलशीतलसुस्वादुजलपूर्णमिति यावत्। भगवतः पितामहस्य ब्रह्मणः। अपत्यं सन्तानम्।

कथाभट्टीया

समान, सप्तसागररूपी राजा की महिषी आकाशगङ्गा के मार्ग से भूमि में अवतरण किया। आकाश में स्थित ही सरस्वती ने वरुण के हार के समान स्थित, चन्द्रपर्वत के अमृत प्रवाह के सदृश, विन्ध्याचल के चन्द्रकान्तमणि के प्रवाहरूप,

महस्यापत्यं हिरण्यवाहनामानं महानदम्, यं जनाः शोण इति कथयन्ति । दृष्ट्वा च तं रामणीयकहृतहृदया तस्यैव तीरे वासमरचयत् । उवाच च सावित्रीम्—'सखि, मधुरमयूरविरुतयः कुसुमपांशुपटलसिकतिलतरुतलाः परिमलमत्तमधुपवेणीवीणारणितरमणीया रमयन्ति मां मन्दीकृतमन्दाकिनीद्युतेरस्य महानदस्योपकण्ठभूमयः । पक्ष-

जयश्रीः

हिरण्यवाहनामानं हिरण्यवाहाख्यं महानदमम्बरतलस्थितैवाकाशप्रदेशस्थितैवापश्यद् ददर्श । यं हिरण्यवाहनामकं नदं जना मानवाः शोण इति कथयन्ति वदन्ति । लोके शोणनदनाम्नास्य प्रसिद्धिरिति भावः । तं शोणनदं दृष्ट्वा विलोक्य । रमणीयस्य भावो रामणीयकं तेन हृतमाकृष्टं हृदयं मानसं यस्याः सा तथोक्ता सौन्दर्याकृष्टमानसेति भावः । तस्यैव शोणनदस्यैव तीरे वासं निवासमरचयत् कृतवती । सावित्रीं स्वसखीं च । उवाच जगाद । मधुरा मनोरमा मयूराणां केकिनां विरुतयः केकाः यासु ता मधुरमयूरविरुतयो मनोरमबर्हिवचनाः । कुसुमानां पुष्पाणां पांशुपटलैः परागनिवहैः सिकतास्य सञ्जातेति सिकतिलं सिकतामयं तरूणां वृक्षाणां तलमधःप्रदेशो यासु ताः । तथोक्ताः पुष्पपरागनिवहवालुकामयवृक्षाधोदेशा इति यावत् । परिमलेन पुष्पगन्धेन मत्ता ये मधुपा भ्रमरास्तेषां वेणी पङ्क्तिरेव वीणा विपञ्ची ( रूपकालङ्कारः ) तस्या रणितेन निनादेन रमणीया मनोरमा इति यावत् । पुष्पगन्धमत्तभ्रमरश्रेणिविपञ्चीनिनादमनोरमा इति यावत् । मन्दीकृता निस्तेजस्कीकृता मन्दाकिन्या अकाशगङ्गाया द्युतिः कान्तिर्येन स तस्य । निराकृताकाशगङ्गाकान्तेरस्य महानदस्य शोणाख्यस्योपकण्ठभूमयः प्रान्तप्रदेशाः । मां

कथाभट्टीया

दण्डकारण्य के कर्पूरवृक्ष के रसरूप, दिशाओं के लावण्यरस, आकाशलक्ष्मी के स्फटिकशिलारूप, निर्मल शीतल सरस जल से परिपूर्ण, भगवान् पितामह की सन्तान, शोणनद के नाम से विख्यात, हिरण्यवाहननामक नद को देख कर सुन्दरता से आकृष्ट होकर उसी नद पर निवासस्थान कल्पित किया । और सावित्री को कहा कि सखि ! मयूरों के मधुर वचनों से युक्त, वृक्षों के नीचे पुष्पधूलि से व्याप्त, पुष्प गन्ध से मत्त भ्रमरपंक्तिरूपी वीणा के शब्द से मनोरम, मन्दाकनी से भी अधिक सुन्दर शोणनद का प्रान्त भाग मनोरम है । यहाँ

पाति च हृदयमत्रैव स्थातुं मे' इति । अभिनन्दितवचना च तथेति तया तस्य पश्चिमे तीरे समवातरत् । एकस्मिंश्च शुचौ शिलातलस-नाथे तटलतामण्डपे गृहबुद्धिं बबन्ध । विश्रान्ता च नातिचिरादुत्थाय सावित्र्या सार्धमुच्चितार्चनकुसुमा सस्नौ । पुलिनपृष्ठप्रतिष्ठापित-सैकतशिवलिङ्गा च भक्त्या परमया पञ्चब्रह्मपुरःसरां सम्यङ्मुद्राब-न्धविहितपरिकरां ध्रुवागीतिगर्भामवनिपवनवनगगनदहनतपनतुहि-

जयश्रीः

सरस्वतीं रमयन्ति प्रीणयन्ति । अत्रैव महानदे स्थातुं स्थितिं कर्तुं मे मम हृदयं मानसं पक्षपाति पक्षपातं कुरुते, अत्रैव स्थातव्यमिति भावः । तया सावित्र्या तथेति तथास्तु इति अभिनन्दितं प्रशंसितं वचनं वाक्यं यस्याः सा तथोक्ता प्रशं-सितवाक्या सरस्वती तस्य शोणनदस्य पश्चिमे तीरे तटे समवातरदवरुरोह । शुचौ शुद्धे शिलातलेन दृषत्पट्टेन सनाथे सहिते । एकस्मिन् तटे तीरे यो लतामण्डपो वल्लीगेहं तस्मिन् तीरस्थवल्लीगृहे निकुञ्ज इति भावः । गृहबुद्धिं सदनमतिं बबन्ध चकार । विश्रान्ता च किञ्चित्कालं स्थिता सती नातिचिरात्तूर्णमेवोत्थाय उच्चिता-नि सञ्चितानि, अर्चनाय पूजनाय कुसुमानि पुष्पाणि यया सोच्चितार्चनकुसुमा स-ङ्गृहीतपूजापुष्पा । सावित्र्या सार्धं सह सस्नौ स्नानं चक्रे । पुलिनपृष्ठे तीरप्रदेशे "तोयोत्थितं तत्पुलिनम्" इत्यमरः । प्रतिष्ठापितं समुपवेशितं सैकतं सिकतामयं शिवलिङ्गं पार्थिवेश्वरलिङ्गं यया सा तथोक्ता तीरभूमिसमुपवेशितपार्थिवेश्वरलिङ्गे-ति यावत् । परमयोत्कृष्टया भक्त्या श्रद्धया । अवनिश्च पृथ्वी च, पवनश्च वायुः, वनं जलम् , गगनमाकाशम् , दहनोऽग्निः, तपनः सूर्यः, तुहिनकिरणश्चन्द्रः, यजमान-

कथाभट्टीया

ही मेरा हृदय स्थिति करना चाहता है । सावित्री से अनुमोदित सरस्वती ने शोण-नद के पश्चिम तीर पर अवतरण किया । उत्तम शिला से युक्त तीर के लता-मण्डप को गृह बनाया । कुछ देर विश्राम करके उठ कर सावित्री के साथ पूजा-पुष्पादि लेकर सरस्वती ने स्नान किया । तीर भूमि पर पार्थिव शिवलिङ्ग को विराजमान करके अत्यन्त भक्ति से पृथ्वी, वायु, जल, आकाश, सूर्य, चन्द्र, यजमान अग्निरूपी शंकर की आठ मूर्तियों का ध्यान करती हुई, सद्योजात, वामदेव, तत्पुरुष, अघोर और ईशान इन पांच स्वरूपों की तन्त्र शास्त्रोक्त-

जकिरणयजमानमयीर्मूर्तीरष्टावपि ध्यायन्ती सुचिरमष्टपुष्पिकाम-दात् । अयत्नोपनतेन फलमूलेनामृतरसमप्यतिशिशयिषमाणेन च स्वादिम्ना शिशिरेण शोणवारिणा शरीरस्थितिमकरोत् । अतिवाहि-

जयश्रीः

रुचेति तन्मयीस्तत्स्वरूपास्तथोक्ताः । पृथ्वीवायुजलाकाशाग्निसूर्यचन्द्रयजमान-स्वरूपाः । अष्टावपि मूर्तीः प्रतिमाः । यथा "या सृष्टिः स्रष्टुराद्या" इति शाकुन्तलनाटकपद्येऽष्टमूर्तिवर्णनम् । ध्यायन्ती चिन्तयन्ती । पञ्च ब्रह्माणि पुरःसराणि यस्यां सा तथोक्ता सद्योजात-वामदेव-तत्पुरुष-अघोर-ईशानाख्यपञ्चब्रह्मप्रमुखाः । सम्यग्वरं यो मुद्राबन्धः शास्त्रोक्तमुद्राकरणं तेन विहितः कृतः परिकरः पूजासामग्री यया सा तां तथोक्ताम् । वरमुद्रायोजनकृतपूजासामग्रीमिति यावत् । "मुद्राविमुक्तहस्तेन क्रियते कर्म दैविकम् । यदि तन्निष्फलं तस्मात् कर्म मुद्रान्वितञ्चरेत्" इति मुद्रावश्यकता तन्त्रशास्त्रोक्ता । ध्रुवा एतदाख्या गीतिर्गानं गर्भे मध्ये यस्यां सा कृतध्रुवाख्यगाना । "गीतिस्रुग्भेदयोर्ध्रुवा" इति शाश्वतः । अष्टौ पुष्पाणि कुसुमानि एवाष्टपुष्पिका ताम् । यथोक्तम्-"बकं द्रोणं च दुधूरं सुमना पटला तथा । पद्ममुत्पलगोसूर्यमष्टौ पुष्पाणि शङ्करे" इति कादम्बरीटीकाकारेण । यद्वा गन्धप्रधानं पुष्पं पार्थिवम्, अर्घस्नानादिकं रसप्रधानमाप्यम्, प्रदीपाभरणादिकरूपप्रधानं तैजसम्, अनुलेपनप्रभृति स्पर्शप्रधानं वायवीयम्, सुशिरातोद्यगीतादिकं शब्दप्रधानमाकाशीयम्, अनुध्यानं मानसम्, अस्ति सर्वत्रैवेश्वर इति निश्चयो बौद्धम्, अहमेवेश्वर इत्याहङ्कारिकम्, इत्यष्टपुष्पिका । तां सुचिरं बहुकालम् । अदात् समर्पितवती । अयत्नं विना प्रयासम्, उपनतं प्राप्तमित्ययत्नोपनतमनायासमिलितं तेन । फलं मूलं च तेन फलमूलेन । अमृतरसमपि सुधाद्रवमपि । अतिशेतुमभिभवितुमिच्छतातिशिशयिषमाणेनाभिभवितुमिच्छता । स्वादिम्ना सुस्वादवता । शिशिरेण शीतलेन शोणवारिणा शोणनदजलेन । शरीरस्य वपुषः स्थितिमवस्थानमकरोत् कृतवती । फलमूलेन जलेन च स्वप्राणधारणं चकार सरस्वतीति भावः । अतिवाहितोऽतिक्रामितो दिवसो दिनं यया सा तादृशी । अतिक्रामित-

कथाभट्टीया

मुद्रा बन्धन सहित, ध्रुवागीतिका गायन करती हुई चिरकाल तक आठ प्रकार के पुष्प चढ़ाती रही । स्वतः प्राप्त फल मूल से तथा अमृत से भी सुन्दर स्वादु

तद्दिवसा च तस्मिन्नेव लतामण्डपशिलातले कल्पितपल्लवशयना सुष्वाप । अन्येद्युरप्यनेनैव क्रमेण नक्तन्दिनमत्यवाहयत् ।

एवमतिक्रामत्सु दिवसेषु गच्छति च काले याममात्रोद्गते च रवावुत्तरस्यां ककुभि प्रतिशब्दपूरितवनगह्वरं गम्भीरतारतरं तुरङ्गहेषितह्रादमश्रृणोत् । उपजातकुतूहला च निर्गत्य लतामण्डपाद्विलोकयन्ती विकचकेतकीगर्भपत्रपाण्डुरं रजःसङ्घातं नातिद्वीयसि सम्मुख-

जयश्रीः

दिनेति यावत् । तस्मिन् लतामण्डपस्य निकुञ्जस्य शिलातले दृषत्पट्टे । कल्पितं निर्मितं पल्लवैः किसलयैः शयनं शय्या यया सा कल्पितपल्लवशयना विरचितकिसलयतल्पा । सुष्वाप शिश्ये । अन्येद्युरन्यस्मिन्नहनि । अनेनैव क्रमेण विधिना नक्तंदिनं रात्रिंदिवमत्यवाहयदतिक्रामितवती ।

एवमिति—एवमनेन प्रकारेण । दिवसेषु दिनेषु । अतिक्रामत्सु । कालेऽनेहसि च गच्छति याति सति । रवौ सूर्ये च याममात्रं प्रहरमात्रमुद्गते याते सति । उत्तरस्यामुदीच्यां ककुभि दिशि । प्रतिशब्देन प्रतिध्वनिना पूरितं भरितं वनगह्वरं वनगुहा येन स तं प्रतिध्वनिभरितकाननगुहमिति यावत् । गम्भीरश्चिरकालस्थितः, तारतरश्चोच्चैस्तरश्च तं गभीरोच्चतरम् । तुरङ्गाणामश्वानां हेषितमश्वशब्दस्तत्स्वरूपो ह्रादो ध्वनिस्तं तुरगहेषितशब्दमश्रृणोत् शुश्राव । उपजातः सञ्जातः कुतूहलः कौतुकं यस्याः सा सञ्जातकौतुका । लतामण्डपाल्लतागृहान्निर्गत्य बहिरागम्य, विलोकयन्ती पश्यन्ती, नातिद्वीयसि नातिदूरे । विकचा प्रफुल्ला या केतकी तस्या गर्भे मध्ये यत्पत्रं दलं तद्वत्पाण्डुरं श्वेतवर्णम् । विकसितकेतकीमध्यस्थपल्लवश्वेतवर्णमिति यावत् । सम्मुखमापतन्तमभिमुखमागच्छन्तम् । रजःसंघातं

कथाभट्टीया

शिशिर शोणनद के जल से अपने जीवन का निर्वाह किया । इस प्रकार दिन को व्यतीत करके उसी लता मण्डप की शिला पर पत्तों की शय्या बना कर निद्रित हुई । इसी प्रकार रात्रि और दिन व्यतीत करने लगी । इस प्रकार समय व्यतीत होने पर सूर्योदय के एक प्रहर के बाद उत्तर दिशा में प्रतिध्वनि से वन को व्याप्त करने वाला अत्यन्त गम्भीर अश्व का शब्द सुना गया । कौतुक के कारण

मापतन्तमपश्यत् । क्रमेण च सामीप्योपजायमानाभिव्यक्ति, तस्मिन्महति शफरोदरधूसरे रजसि पयसीव मकरचक्रं प्लवमानम्, पुरः प्रधावमानेन, प्रलम्बकुटिलकचपल्लवघटितललाटजूटकेन, धवलदन्तपत्रिकाद्युतिहसितकपोलभित्तिना, पिनद्धकृष्णागुरुपङ्ककल्कचछुरण-

जयश्रीः

धूलिनिवहम् । अपश्यत् व्यलोकयत् । क्रमेणेति—क्रमेणेत्यारभ्याश्ववृन्दं सन्ददर्शेति सम्बन्धः । क्रमेण समीपस्य भावः सामीप्यं सान्निध्यं तेनोपजायमानोत्पद्यमानाभिव्यक्तिः प्राकट्यं यस्य तत् सामीप्योपजायमानाभिव्यक्ति = सान्निध्योत्पद्यमानप्राकट्यमिति यावत् । तादृशमश्ववृन्दम् । तस्मिन्महति विशाले । शफरोदरवत् मीनोदरवद् धूसरे मलिने रजसि धूल्यां, शफरोदरैर्मीनानामुदरैर्मध्यभागैर्धूसरे मलिने । पयसि नीरे, मकरचक्रमिव मीननिवहमिव प्लवमानं धावमानं मकरपक्षे तरत् । उत्प्रेक्षालङ्कारः । पुरोऽग्रे प्रधावमानेनातिशीघ्रं गच्छता । प्रलम्बा लम्बमानाः कुटिला वक्राः कचाः केशा एव सौकुमार्यात्पल्लवाः किसलयाः । ( अत्र रूपकालङ्कारः ) तैर्घटितं निर्मितं ललाटे जूटकं जटासमूहो येन तथोक्तेन । लम्बमानवक्रकेशकिसलयनिर्मितालिकजटाजूटेनेति यावत् । ललाटे जटाजूटकं दाक्षिणात्यानां वेशः । धवला सितवर्णा या दन्तपत्रिका गजदन्तनिर्मितकर्णाभरणं तस्या द्युतिः कान्तिस्तया हसितोद्भासिता कपोलयोर्गण्डस्थलयोर्भित्तिः प्रदेशो यस्य तत् तेन सितगजदन्तनिर्मितावतंसकान्तिसमुद्भासितगण्डदेशेनेति यावत् । पिनद्धो बद्धः, णह बन्धने धातुर्दैवादिकः । अपिरत्रोपसर्गस्तस्य चाकारस्य भागुरिमतेन लोपः । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति वचनात् । एवं पिनद्धशब्दः क्तप्रत्ययान्तः । कृष्णागुरुणो गन्धद्रव्यविशेषस्य पङ्को निर्घृष्टांशः । तस्य कल्कश्चूर्णः । तच्छुरणादधिवासात् कृष्णेन श्यामवर्णेन गुणेन

कथाभट्टीया

लतामण्डप से बाहर आकर दृष्टि फेंकती हुई सरस्वती ने विकसित केतकी पत्र समान श्वेत, संमुख आते हुए धूलि निवह को देखा। क्रम से निकट आने के कारण स्पष्ट रूप से दिखाने वाले तथा मत्स्य के उदर के समान धूसर उस धूलि निवह में जल में तैरते हुए मत्स्यसमूह के समान स्थित, आगे चलने वाले, लम्बे २ कुटिल केश रूपी पल्लवों के जटाजूट से युक्त, श्वेत

कृष्णशबलकषायकञ्चुकेन, उत्तरीयकृतशिरोवेष्टनेन, वामप्रकोष्ठनिविष्टस्पष्टहाटककटकेन, द्विगुणपट्टपट्टिकागाढग्रन्थिग्रथितासिधेनुना, अनवरतव्यायामकृशकर्कशशरीरेण, वातहरिणयूथेनेव मुहुर्मुहुः खमुड्डीयमानेन, लङ्घितसमविषमावटविटपेन, कोणधारिणा, कृपाणपा-

जयश्रीः

शबलं चित्रं कषायं सुरभिः कञ्चुकं वारबाणं यस्य तत् तथोक्तम् । बद्धकालागुरुपङ्कचूर्णाधिवासचित्रसुरभिवारबाणेनेति यावत् । उत्तरीयेण दुकूलविहितोष्णीषेणेति यावत । वामप्रकोष्ठे सव्यहस्तभागे । "प्रकोष्ठमन्तरं विद्यादरत्निर्मणिबन्धयोः" इत्युक्तम् । निविष्टं धृतं स्पष्टं स्फुटं स्थूलमित्यर्थः । यथा तथा हाटकस्य सुवर्णस्य कटकं वलयो येन तत् तथोक्तेन । सव्यहस्तभागधृतस्फुटसुवर्णवलयेनेति यावत् । वामहस्ते कटकधारणेनाश्रमिस्वभावता शृङ्गारिता चोक्ता । द्विगुणो द्विरावृत्तो यः पट्टः पट्टवसनं तस्य पट्टिका खण्डं तस्या गाढेन सुदृढेन ग्रन्थिना बन्धनेन ग्रथिता बद्धासिधेनुश्छुरिका येन तत् तथोक्तेन । द्विरावृत्तपट्टवसनखण्डसुदृढबन्धनबद्धछुरिकेणेति यावत् । "छुरिका चासिधेनुका" इत्यमरः । अनवरतं निरन्तरं यो व्यायामोऽङ्गचालनं तेन कृशं मेदोहीनं कर्कशं कठिनं शरीरं वपुर्यस्य तत् तेन निरन्तराङ्गचालनविशेषमेदोरहितकठिनवपुषेति यावत् । वातहरिणानां वातप्रमीणां मृगविशेषाणाम् । वाताभिमुखं ये मृगा धावन्ति ते वातहरिणाः । तेषां यूथेनेव निवहेनेवेत्युत्प्रेक्षा । मुहुर्मुहुः खमाकाशमुड्डीयमानेन । अतिवेगेन धावतेत्यर्थः । लङ्घिता अतिक्रान्ताः समाः साधारणा विषमा निम्नोन्नता अवटा गर्ता विटपा वृक्षशाखाश्च येन तत्तथोक्तेन । "गर्तावटौ भुविश्वभ्रे" इत्यमरः । कोणं लगुडं धरतीति तथोक्तेन लगुडभृता । "कोणो वाद्यप्रभेदः स्यात् वीणादीनां च वादने । एकदेशे गृहादीनामश्रौ च लगुडेऽपि च" इति मेदिनी । कृपाणोऽसिः पाणौ यस्य

कथाभट्टोया

हाथीदांत की पत्रिका से अलंकृत कपोल वाले, कृष्णा अगर के चूर्ण से कृष्ण और विचित्र एवं सुगन्धि कञ्चुक को धारण करने वाले, उत्तरीय से शिरोवेष्टन करके वामहस्त में सुवर्ण के वलय को धारण करने वाले द्विगुणित वस्त्र छुरिका को बांधने वाले, निरन्तर व्यायाम से कृशशरीर, वायु के साथ हरिणवृन्द के समान अति वेग से दौड़ने वाले, उच्चावच खड्डों और शाखाओं का लङ्घन

णिना, सेवागृहीतविविधवनकुसुमफलमूलपर्णेन, 'चल चल, याहि याहि, अपसर्पापसर्प, पुरः प्रयच्छ पन्थानम्' इत्यनवरतकृतकलकलेन युवप्रायेण, सहस्रमात्रेण पदातिबलेन सनाथमश्ववृन्दं सन्ददर्श ।

(१)मध्ये च तस्य सार्धचन्द्रेण मुक्ताफलजालमालिना विविधरत्नखण्डखचितेन शङ्खक्षीरफेनपाण्डुरेण क्षीरोदेनेव स्वयं लक्ष्मीं दातुमाग-

जयश्रीः

तत्तेन । असिहस्तेनेति भावः । सेवार्थे पूजार्थे गृहीतानि स्वीकृतानि विविधान्यनेकविधानि वनानामरण्यानां कुसुमानि पुष्पाणि फलानि मूलानि पर्णानि पत्राणि येन तत्तेन तथोक्तेन । पूजास्वीकृतानेकविधकाननपुष्पफलमूलपत्रेणेति यावत् । त्वं चल चल त्वं याहि याहि गच्छ गच्छ । अपसर्पापसर्प दूरीभव दूरीभव । पुरोऽग्रे पन्थानं मार्गं प्रयच्छ देहि । इत्यनवरतं निरन्तरं कृतो विहितः कलकलः कोलाहलो येन तत्तथोक्तेन । निरन्तरविहितकोलाहलेनेति यावत् । युवानस्तरुणाः प्रायो बाहुल्येन यस्मिंस्तत् तेन तरुणबहुलेनेति यावत् । सहस्रं मात्रा परिमाणं यस्य तेन सहस्रपरिमितेनेति भावः । पदातिबलेन पादचारिसैन्यबलेन सनाथं सहितमश्ववृन्दं तुरगनिवहं ददर्श विलुलोके सरस्वतीति शेषः ।

अथ कविस्तत्सैन्यमध्यस्थयुववर्णनमारभते-मध्य इत्यादिना । तस्य सैन्यस्य मध्येऽष्टादशवर्षदेशीयं युवानमद्राक्षीत्सरस्वतीति सम्बन्धः । अर्धचन्द्रेण समानं सार्धचन्द्रं तेन तथोक्तेन । मुक्ताफलानां मौक्तिकानां जालं समूहस्तेषां माला हारोऽस्यास्तीति तथोक्तेन । विविधानि नानाविधानि यानि रत्नानां मणीनां खण्डानि तैः खचितेन घटितेन । शङ्खः = कम्बुः, क्षीरं पयः, फेनोऽब्धिकफस्तद्वत्पाण्डुरं श्वेतवर्णं तेन । स्वयं लक्ष्मीं श्रियं दातुं वितरितुमागतेनायातेन क्षीरोदेन

कथाभट्टीया

करने वाले, लगुड को धारण करने वाले कृपाण ( खड्ग ) से युक्त, पूजा के लिये अनेक प्रकार के पुष्प फल मूल और पत्रों को धारण करने वाले, चलिये, रास्ता छोड़िये, हटिये, इत्यादि वचन बोलने वाले, तरुण, सेना समूह से युक्त अश्वसमूह को देखा । इस सेना के मध्य में अर्धचन्द्रमा के समान मोतियों की माला से अलंकृत तथा अनेक रत्नों से भूषित एवं शंख, दुग्ध व फेन के समान श्वेत, लक्ष्मी को देने के लिये स्वयं आये हुए क्षीरसागर के समान स्थित

( १ ) एतदन्तर्गतोंऽशः साहित्यमध्यमापरीक्षाबहिर्भूतः ।

तेन गगनगतेनातपत्रेण कृतच्छायम्, अच्छाच्छेनाभरणद्युतीनां निवहेन दिशामिव दर्शनानुरागलग्नेन चक्रवालेनानुगम्यमानम् , आनितम्बविलम्बिन्या मालतीशेखरस्रजा सकलभुवनविजयार्जितया रूपपताकयेव विराजमानम्, उत्सर्पिभिः शिखण्डखण्डिकापद्मरागमणेररुणैरंशुजालैरदृश्यमानवनदेवताविधृतैर्बालपल्लवैरिव प्रमृज्यमानमार्ग-

जयश्रीः

क्षीरसागरेणेवेत्युत्प्रेक्षा । गगने आकाशे गतेन प्राप्तेनातपत्रेण । कृता विहिता छायानातपो यस्य स तम् । क्षीरोदपक्षेऽपि विशेषणानि योज्यानि । यथार्धचन्द्रसहितेन । मुक्ता एव फलानि तेषां जालानां निवहानां मालास्यास्तीति तथोक्तेन मौक्तिकवतेत्यर्थः । तथा रत्नखण्डसहितेन रत्नाकरेणेति यावत् । शङ्खक्षीरफेनादिभिः सितेन । गगनगतेनाकाशगतेन । कृता छाया कान्तिर्यस्य तत इति क्षीरोदपक्षे । अतिशयेनाच्छमच्छाच्छं तेनाच्छाच्छेनातिविशदेन । अच्छाच्छमिति वीप्सायां द्विरुक्तिः । आभरणानां भूषणानां द्युतयः कान्तयस्तासां तथोक्तानाम् । निवहेन समूहेन दर्शने विलोकने योऽनुरागः स्नेहस्तेन । लग्नेन संसक्तेन । दिशामाशानां चक्रवालेन समूहेनेवेत्युत्प्रेक्षालङ्कारः । अनुगम्यमानमन्वीयमानम् । आनितम्बं नितम्बपर्यन्तम् । "पश्चान्नितम्बः स्त्रीकट्याः" इति कोशः । विलम्बतेऽवलम्बत इति तथोक्तया । मालत्या जातिपुष्पेण निर्मितं शेखरं शिरोभूषणं तस्य स्रजा मालया । "सुमना मालती जातिः" इत्यमरः । सकलभुवनानां सर्वेषां लोकानां विजयेन जयेनार्जितैकत्रीकृता तया । रूपपताकयेव सौन्दर्यवैजयन्त्येव । उत्प्रेक्षालङ्कारः । विराजमानं शोभमानम् । उत्सर्पिभिरूर्ध्वगामिभिः । शिखण्डखण्डिका चूडाभरणं यः पद्मरागमणिस्तस्य । अरुणै रक्तै रंशुजालैः किरणकलापैः । अदृश्यमाना अन्तर्धीयमाना या वनदेवता वनाधिदेवतास्ताभिर्विधृता गृहीता बालपल्लवा नवकिसलयास्तैरिवेत्युत्प्रेक्षा । प्रमृज्यमानोऽपसार्यमाणो मार्गरेणुर्व-

कथाभट्टीया

तथा आकाश में व्याप्त श्वेतछत्र से विभूषित, अति स्वच्छ आभूषणों की कान्ति से दर्शनार्थ आये हुए दिशाओं के समूह की तरह अनुगत, नितम्बभागतक लम्बमान मालती पुष्पों की माला से सकलभुवनों के विजय से अर्जित सौन्दर्यपताका से ही मानो शोभित, अदृश्यमान वनदेवताओं से धृत नवीन पत्रों के समानस्थित

रेणुपरुषवपुषम्, बकुलकुड्मलमण्डलीमुण्डमालामण्डनमनोहरेण कुटिलकुन्तलस्तबकमालिना मौलिना मीलितातपं पिबन्तमिव दिवसम्, पशुपतिजटामुकुटमृगाङ्कद्वितीयशकलघटितस्येव सहजलक्ष्मीसमालिङ्गितस्य ललाटपट्टस्य मनःशिलापङ्कपिङ्गलेन लावण्येन लिम्पन्तमिवान्तरिक्षम्, अभिनवयौवनारम्भावष्टम्भप्रगल्भदृष्टिपाततृणीकृतत्रि-

जयश्रीः

र्मार्गधूलिस्तेन परुषं कठोरं वपुः शरीरं यस्य स तेन। बकुलकुड्मलानां बकुलतरुकोरकाणां मण्डली समूह एव मुण्डमाला शिरोमाला तया मण्डनं शोभा तेन मनोहरेण। कुटिला वक्राः कुन्तलाः केशा एव स्तबका गुच्छास्तेषां माला समूहोऽस्यास्तीति तद्वता तथोक्तेन। मौलिना कीरीटेन शिरोभूषणेनेत्यर्थः। "मौलो किरीटधम्मिल्लौ" इत्यमरः। मीलितो निर्वापित आतपः सौरतापो येन स तं तथोक्तम्। दिवसं दिनं पिबन्तमिव ग्रसन्तमिवस्थितमित्युत्प्रेक्षालङ्कारः। पशुपतेः शङ्करस्य जटासु मुकुटभूतः शिरोभूषणभूतो यो मृगाङ्कश्चन्द्रमास्तस्य द्वितीयमपरं शकलं खण्डं तेन घटितं रचितं तस्येवेत्युत्प्रेक्षा। सहजा स्वाभाविकी या लक्ष्मीः शोभा तया समालिङ्गितस्य समाश्लिष्टस्य चन्द्रपक्षे सहजा सहोदरा या लक्ष्मीः श्रीस्तया समालिङ्गितस्य। ललाटपट्टस्य निटिलपट्टस्य। मनःशिला रक्तवर्ण उपधातुविशेषस्तस्य पङ्को द्रवस्तद्वत्पिङ्गलं पिङ्गलवर्णस्तेन। लावण्येन सौन्दर्येण।

"मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते"॥

इति लावण्यस्वरूपम्। अन्तरिक्षं गगनम्। "नभोऽन्तरिक्षं गगनम्" इत्यमरः। लिम्पन्तमिव व्याप्नुवन्तमिव स्थितमित्युत्प्रेक्षा। अभिनवं नूतनं च यत् यौवनं तारुण्यं तस्यारम्भः प्रारम्भस्तेनावष्टम्भो गर्वस्तेन प्रगल्भो गभीरो यो दृष्टिपातो दर्शनं तेन तृणीकृतं निःसारीकृतं त्रिभुवनं लोकत्रयं येन तत्। तादृशस्य

कथाभट्टीया

तथा फैलने वाले मस्तक में स्थित पद्मराग मणियों के रक्त किरणों से दूर की गई मार्ग की धूलि से कठोर शरीर वाले, बकुल की कुड्मल (डोडी) रूपी मुण्डमाला से मनोहर तथा कुटिल केशसमूह से अलंकृत शिरोभूषण से दिन के आतप को ही मानो ग्रसित करने वाले, शङ्कर की जटा में स्थित चन्द्रमा के दूसरे खण्ड से

भुवनस्य चक्षुषः प्रथिम्ना विकचकुमुदकुवलयकमलसरःसहस्रसंछादि तद्दशदिशं शरदमिव प्रवर्त्तयन्तम्, आयतनयननदीसीमान्तसेतुबन्धेन ललाटतटशशिमणिशिलातलगलितेन कान्तिसलिलस्रोतसेव द्राघीयसा घोणावंशेन शोभमानम्, अतिसुरभिसहकारकर्पूरकक्कोललवङ्गपारिजातकपरिमलमुचा मत्तमधुकुरकुलकोलाहलमुखरेण मुखेन

जयश्रीः

चक्षुषो नयनस्य प्रथिम्ना विशालतया विकचानि विकसितानि कुमुदानि रात्रिविकासिकमलानि, कुवलयानि नीलोत्पलानि कमलानि पद्मानि च तेषां सरःसहस्रैः सरोवरनिवहैः संछादिता व्याप्ता दश दिश आशा यया सा ताम् । शरदं प्रवर्त्तयन्तं प्रकटयन्तमिवेत्युत्प्रेक्षा । आयते विशाले नयने नेत्रे एव नद्यौ तयोः सीमान्तः प्रान्तभागस्तस्मिन् सेतुबन्धस्तेन बद्धसेतुनेत्यर्थः । ललाटतटमेव निटिलतटमेव शशिमणिशिलातलं चन्द्रकान्तमणिदृषत्पट्टं तस्माद् गलितं पतितं तेन । कान्तिरेव द्युतिरेव सलिलं जलं तस्य स्रोतसा प्रवाहेण । इवेत्युत्प्रेक्षालङ्कारः । द्राघीयसा दीर्घतरेण । घोणावंशेन नासावंशेन शोभमानं विराजमानम् । अतिसुरभिः सगन्धो यः सहकारः सुगन्धद्रव्यभेदः आम्रश्च, अतिसुरभि सुगन्धं कर्पूरं कक्कोलं वनकर्पूरं लवङ्गं पारिजातकमनेकद्रव्यसंस्कृतो मुखावासो देवतरुकुसुमं च तेषां परिमलं गन्धं मुञ्चतीति तादृशेन । मत्तानि प्रमत्तानि यानि मधुकरकुलानि भ्रमरनिवहास्तेषां कोलाहलेन कलकलेन मुखरं शब्दायमानं तेन । मुखेन वदनेन नन्दनवनेन नन्द-

कथाभट्टीया

बनाये गये एवं स्वाभाविक सुन्दरता से युक्त ललाटपट्ट के मनःशिला के समान पीत लावण्य से आकाश को ही मानो व्याप्त करने वाले, नवीन यौवन के प्रारम्भ के गर्व से गम्भीर दृष्टि द्वारा त्रिभुवन को तुच्छ बतलाने वाले नेत्र की विशालता से प्रफुल्लित कुमुद, नीलकमल व कमलों के सहस्रों सरोवरों से भूमण्डल को आछन्न करने वाली शरद् ऋतु को ही मानो प्रकाशित करने वाले, विशाल नेत्र रूपी नदियों के विभाग के करने के सेतुबन्धन के समानस्थित तथा ललाटरूपी चन्द्रकान्तमणि से गिरते हुए कान्तिरूपी जल के प्रवाह के समान स्थित दीर्घ नासावंश से सुशोभित, अत्यन्त सुगन्धित आम्र, कपूर, वनकपूर, लवङ्ग व पारिजातके गन्ध से युक्त तथा मत्त भ्रमरों के कोलाहल से सहित मुख से नन्दन वन के

सनन्दनवनं वसन्तमिव वमन्तम् , आसन्नसुहृत्परिहासभावेनोत्तानितमुखमुग्धहसितैर्दशनज्योत्स्नास्नपितदिङ्मुखैः पुनःपुनर्नभसि सञ्चारिणं चन्द्रलोकमिव कल्पयन्तम् , कदम्बमुकुलस्थूलमुक्ताफलयुगलमध्याध्यासितमरकतस्य त्रिकण्टककर्णाभरणस्य प्रेङ्खतः प्रभया समुत्सर्पन्त्या कृतसकुसुमहरितकुन्दपल्लवकर्णावतंसमिवोपलक्ष्यमाणम् , आमोदितमृगमदपङ्कलिखितपत्रभङ्गभास्वरम् , भुजयुगलमुद्दाममक-

जयश्रीः

नाख्येनेन्द्रकाननेन सहितं सनन्दनवनं वसन्तं मधुमासं वमन्तमिवोद्गिरन्तमिव स्थितम् । वसन्तोऽप्येतादृशेनैव मुखेन प्रारम्भेणोपलक्षितो भवति । आसन्नाः समीपस्था ये सुहृदो मित्राणि तेषां परिहासभावनयोपहासबोधेनोत्तानितमुन्नमितं यन्मुखं वदनं तस्य मुग्धानि सुन्दराणि हसितानि हासास्तैः । "मुग्धः सुन्दरमूढयोः" इति मेदिनी । कीदृशैर्हासैः—दशनानां दन्तानां ज्योत्स्नाभिः कान्तिभिः स्नपितानि समावृतानि दिशामाशानां मुखानि वदनानि यैस्तानि तैः । पुनः पुनर्वारं वारम् । नभसि आकाशे सञ्चारिणं विहारिणं चन्द्रस्यालोकमिव ज्योत्स्नामिव कल्पयन्तं कुर्वन्तम् । यदा यदा तस्य हसितानि भवन्ति तदा तदा दशनकान्तयश्चन्द्रिका इव दृश्यन्त इति भावः । कदम्बस्य नीपस्य मुकुलः कोरकस्तद्वत्स्थूले विशाले ये मुक्ताफलयुगले मौक्तिकयुग्मे तयोर्मध्ये मध्यदेशेऽध्यासितं समाश्रितं मरकतं नीलमणिर्यस्य तत्तस्य । प्रेङ्खतो दोलतः । रत्नत्रितयेन कृतं त्रिकोणकण्टकाख्यं कर्णाभरणं कर्णावतंसस्तस्य समुत्सर्पन्त्या प्रसरन्त्या प्रभया कान्त्या । कृतो विहितः सकुसुमः पुष्पसहितो हरितो हरिद्वर्णः कुन्दपल्लवस्य माध्यश्वेतकुसुमतरुकिसलयस्य कर्णावतंसः कर्णाभरणं यस्य स तम् । इवोत्प्रेक्षायाम् । उपलक्ष्यमाणं दृश्यमानमित्यर्थः । आमोदितः सुगन्धितो यो मृगमदपङ्कः

कथाभट्टीयाः

समान वसन्त ऋतु को ही मानो उगलने वाले, समीपस्थित मित्रों के साथ परिहास से दन्तकिरणों से दिशाओं का श्वेत बनाने वाले उन्नत मुखों के सुन्दर मन्दहासों से बार बार आकाश में चन्द्रिका को बतलाने वाले कदम्ब के मुकल के समान स्थूलमौक्तिक युगल के मध्य स्थित नीलमणि के कर्णभूषण की उज्ज्वल कान्ति से श्वेत मोगरे के पुष्पों से युक्त हरित पल्लव के कर्णभूषण को प्रदर्शित

राक्रान्तशिखरमिव मकरकेतुकेतुदण्डद्वयं दधानम्, धवलब्रह्मसूत्र-सीमन्तितं सागरमथनसामर्षगङ्गास्रोतःसन्दानितमिव मन्दरं देहमुद्वहन्तम्, कर्पूरक्षोदमुष्टिच्छुरणपांशुलेनेव कान्तोच्चकुचचक्रवाकयुगल-विपुलपुलिनेनोरःस्थलेन स्थूलभुजायामपुञ्जितम्, पुरो विस्तारय-न्तमिव दिक्चक्रम्, पुरस्तादीषदधोनाभिनिहितैककोणकमनीयेन

जयश्रीः

कस्तूरीद्रवस्तेन लिखितः कृतो यः पत्रभङ्गः पत्ररचना तेन भास्वरं दीप्यमानम्। उद्दाम उद्भटो यो मकरो मीनस्तेनाक्रान्तं व्याप्तं शेखरमग्रभागो यस्य तत्। तादृशमिव स्थितमित्युत्प्रेक्षा। मकरकेतोर्मकरध्वजस्य कामस्य केतुदण्डद्वयं ध्वजयष्टियुगलम्। भुजयुगलं हस्तद्वयं दधानं बिभ्राणम्। धवलेन सितवर्णेन ब्रह्मसूत्रेण यज्ञोपवीतेन सीमन्तितं संयतम्। सागरमथनेन सामर्षा सकोपा या गङ्गा नदी तस्याः स्रोतोभिः प्रवाहैः सन्दानितं बद्धं वेष्टितमित्यर्थः। सन्दान्यते स्म "दान खण्डने" ( भ्वा० उ० से० ) इति क्तप्रत्ययः। मन्दरमिव मन्दराचल इव स्थितमित्युत्प्रेक्षा। देहं शरीरमुद्वहन्तं धारयन्तम्। कर्पूरस्य घनसारस्य क्षोदश्चूर्णं तस्य मुष्टिर्मुष्टिमात्रं चूर्णं तस्य छुरणेन लेपनेन पांशुलं धूलिमयं तेनेव। कान्तायाः कामिन्या उच्चकुचावेवोन्नतस्तनावेव चक्रवाकयुगलं तस्य कृते विपुलं च विशालं च तत् पुलिनं च तीरप्रदेशस्तादृशेनोरःस्थलेन वक्षःस्थलेन। स्थूलौ विशालौ यौ भुजौ करौ तयोरायामो दैर्घ्यं तेन पुञ्जितं समाहृतम्। दिक्चक्रं दिङ्मण्डलम्। पुरो विस्तारयन्तमिव। प्रसारयन्तमिव स्थितमित्यर्थः। पुरस्तादग्रे ईषन्न्यूनम्। नाभेरध इत्यधोनाभिः, तत्र निहितः स्थापित एकः कोणोंऽशविशेषस्तेन कमनीयं

कथाभट्टीया

करने वाले, सुगन्धित कस्तूरी के तिलक व पत्र भङ्ग से देदीप्यमान, विकटमीनों ( मगरों ) से युक्त अत एव कामदेव के दो ध्वजदण्ड के समान दो भुजाओं को धारण करने वाले, सागर मन्थन से कुपित हुई गंगा के प्रवाह से बद्ध मन्दराचल के समान धवलयज्ञोपवीत से वेष्टित देह को धारण करने वाले, कर्पूर के चूर्ण से व्याप्त तथा कान्ता के उन्नत स्तनरूपी चक्रवाक युगल के लिये विशाल तटभूमिरूप एवं स्थूल भुजाओं के मध्य में स्थित दीर्घ अवकाश में इकट्ठे हुए वक्षःस्थल से शोभित, आगे दिङ्मण्डल को फैलाने वाले, अग्रभाग में नाभि के

पृष्ठतः कक्ष्याधिकक्षिप्तपल्लवेनोभयतः संवलनप्रकटितोरुत्रिभावेन हारीतहरिता निबिडनिपीडितेनाधरवाससा विभज्यमानतनुतरमध्यभागम्, अनवरतश्रमोपचितमांसकठिनविकटमकरमुखसंलग्नजानुभ्यां विशालवक्षःस्थलोपलवेदिकोत्तम्भनशिलास्तम्भाभ्यां चारुचन्दनस्थासकस्थूलकान्तिभ्यामूरुदण्डाभ्यामुपहसन्तमिवैरावतकरायामम्, अ-

जयश्रीः

सुन्दरं तेन। पृष्ठतः पश्चाद्भागे। कक्षे भवा कक्ष्या "शरीरावयवात्" इति यत्प्रत्ययः। तस्यामधिकं यथा तथा क्षिप्तो लम्बमानः पल्लवः प्रान्तभागो यस्य तत् तेन। उभयत उभयपार्श्वं संवलनेन सङ्कोचेन प्रकटितः प्रकाशित ऊर्वोः पादयोस्त्रिभागस्तृतीयोंऽशो जङ्घाप्रान्तो यस्य तत्तेन। हारीतः पक्षिभेदस्तद्वत् हरिता नीलेन। निबिडं गाढं यथा तथा निपीडितेन संयमितेन। अधरवाससाधोवस्त्रेण। विभज्यमानो विभागीक्रियमाणस्तनुतरः कृशतरो मध्यभागा मध्यदेशो यस्य स तम्। अनवरतं यः श्रमो व्यायामस्तेनोपचितं पुष्टं मांसं तेन कठिनं दृढं विकटं बृहत् यन्मकरमुखं जानुनोरुपरिभागस्तेन संलग्ने सम्बद्धे जानुनी ययोस्ताभ्याम्। विशालं बृहत् वक्षःस्थलमेवोरःप्रदेश एवोपलवेदिका पाषाणमयी वेदिका तस्या उत्तम्भनाय धारणाय शिलास्तम्भौ पाषाणनिर्मितौ स्तम्भौ ताभ्याम्। चारुणा मनोहरेण चन्दनस्य स्थासकेन चर्चया "चर्चा तु चार्चिक्यं स्थासक" इत्यमरः। स्थूला महती कान्तिर्द्युतिर्ययोस्ताभ्याम्। ऊरुदण्डाभ्यामैरावतस्येन्द्रगजस्य करायामं शुण्डादण्डदैर्घ्यम्। उपहसन्तमिव तिरस्कुर्वन्तमिवेत्युत्प्रेक्षा। अतिभरितयोर्भारपूर्णयोरूर्वोर्भारस्य वहनेन धारणेन यः खेदः श्रमस्तेनेव तनुतरं कृशतरं

कथाभट्टीया

नीचे स्थित एक कोण से (प्रान्त से) सुन्दर तथा पीछे के भाग में कक्षप्रदेश में लम्बमान वस्त्रप्रान्तभाग से युक्त एवं दोनों पार्श्वभागों में संकोच के कारण पादों के तृतीय भाग को प्रदर्शित करने वाले हारीत पक्षी के समान हरित वर्ण वाले दृढबद्ध अधरवस्त्र से कृशशरीर के मध्यभाग को विभक्त करने वाले, निरन्तर परिश्रम से परिपुष्टमांस के कारण विकट मकरमुख (जानु का उपरिभाग) में जानुओं से सम्बद्ध तथा विशाल वक्षःस्थलरूपी पाषाण शिला के धारण के लिये स्तम्भभूत एवं मनोहर चन्दन के स्थासकों से चर्चित ऊरुदण्डों

तिभरितोरुभारवहनखेदेनेव तनुतरजङ्घाकाण्डम् , कल्पपादपपल्लव-द्वयस्येव पाटलस्योभयपार्श्वावलम्बिनः पादद्वयस्य दोलायमानैर्नख-मयूखैरश्वमण्डनचामरमालामिव रचयन्तम् , अभिमुखमुच्चैरुदञ्चद्भि-रतिचिरमुपरिविश्राम्यद्भिरिव वलितविकटं पतद्भिः खुरैः, खण्डि-तभुवि प्रतिक्षणदशनविमुक्तखणखणायितखरखलीने दीर्घघ्राणलीनला-

जयश्रीः

प्रशस्ता जङ्घा जङ्घाकाण्डं यस्य स तम् । कल्पपादस्य कल्पवृक्षस्य पल्लवद्वयं किसलयद्वयं तस्येव । अत्र कल्पपादपसम्बन्धितया सकलसम्पत्प्रदत्वादिप्रकर्षो व्यज्यते । पाटलस्य श्वेतरक्तस्य । उभयपार्श्वयोरवलम्बते इति उभयपार्श्वावलम्बि तस्य पार्श्वद्वयावलम्बिनः । पादद्वयस्य चरणद्वयस्य । दोलायमानैश्चञ्चलैः । नख-मयूखैर्नखकिरणैः । अश्वस्य तुरगस्य मण्डनालङ्कारभूता, चामराणां वालव्यजनानां माला श्रेणिस्तामिव रचयन्तं कुर्वाणम् । अभिमुखं सम्मुखमुच्चैरुन्नतं यथा तथा । उदञ्चद्भिरुत्पतद्भिः । अतिचिरं चिरकालम् । अतिचिरशब्देन तुरगगाम्भीर्यं द्योत्य-ते । यथोक्तं सङ्केतव्याख्यायां शङ्करेण—

"आवृता कुञ्चिता स्थूलदलपाल्यग्रसंस्थिताः ।
विवर्ज्याश्चाकुलपदन्यासेन गमनेन च" ॥ इति ।

उपरि ऊर्ध्वभागे विश्राम्यद्भिरिव तिष्ठद्भिरिव । वलितेन गतिविशेषेण विकटं समुद्धतं यथा तथा पतद्भिः खुरैः शफैः । खण्डिता चूर्णीकृता भूः पृथ्वी येन स तस्मिन् । खुरैरिति तद्व्यापारविशेषाद्बहुत्वम् । प्रतिक्षणं प्रतिपलम् , दशनैर्दन्तै-र्विमुक्तं त्यक्तं खणखणायितं खणखणेति शब्दायमानं खरं कठिनं खलीनं कविका यस्य तस्मिन् । "कविका तु खलीनोऽस्त्री" इत्यमरः । दीर्घे विशाले घ्राणे नासा-

कथाभट्टीया

से ऐरावत के शुण्डादण्ड की विशालता का उपहास करने वाले, अतिभारयुक्त ऊरुओं के धारण करने के श्रम से ही मानो कृशतर जङ्घाओं से युक्त, कल्पवृक्ष के दो पल्लवों के समान सुन्दर व श्वेतरक्त तथा अश्व के दोनों पार्श्वभागों में लम्बमान दोनों चरणों के चञ्चल नखकिरणों से अश्व के दोनों पार्श्वभागों में चामरमाला रूपी अलंकार को निर्मित करने वाले, आगे की तरफ उठने वाले और ऊपरी भाग में अधिक स्थिति से ही मानो जोरों से गिरने वाले खुरों से

लिकललाटलुलितचारुचामीकरचक्रके शिञ्जानशातकौम्भजयशोभिनि मनोरंहसि गोलाङ्गूलकपोलकालकायलोम्नि नीलसिन्धुवारवर्णे वाजिनि महति समारूढम्, उभयतः पर्याणपट्टश्लिष्टहस्ताभ्यामासन्नपरिचारकाभ्यां दोधूयमानधवलचामरिकायुगलम्, अग्रतः पठतो बन्दिनः सुभाषितमुत्कण्टकितकपोलफलकेन लग्नकर्णोत्पलकेसरप-

जयश्रीः

र्यां लीनो युक्तो लालिकः कविकाशेखरं यस्य तादृशे ललाटे निटिलतटे लुलितं लुठितं चारु रम्यं चामीकरस्य सुवर्णस्य चक्रकं समूहो यस्य स तस्मिन् । शिङ्क्ते इति शिञ्जानं स्वनत् । "शिजि अव्यक्ते शब्दे" ( अ० आ० से० ) । शातकौम्भं सौवर्णं यत् जयनं हयमण्डनमाला तेन शोभत इति ताच्छील्ये णिनिः प्रत्ययः । तस्मिन् । मन इव रंहो वेगो यस्य तादृशे । गोलाङ्गूलस्य कृष्णमुखवानरस्य कपोलवद्गण्डस्थलवत् कालानि श्यामवर्णानि कायस्य शरीरस्य लोमानि रोमाणि यस्य स तस्मिन् । नीलो नीलवर्णो यः सिन्दुवारो निर्गुण्डीपुष्पं तस्य वर्ण इव वर्णो यस्य स तस्मिन् । "सिन्दुवारेन्द्रसुरसा निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः । महति विशाले वाजिनि तुरङ्गे समारूढं स्थितम् । उभयतः पार्श्वद्वये पर्याणपट्टेऽश्वपृष्ठस्थासनविशेषे, श्लिष्टौ युक्तौ हस्तौ ययोस्ताभ्याम् । आसन्नपरिचारकाभ्यां समीपस्थसेवकाभ्याम् । दोधूयमाने वीज्यमाने धवले सितवर्णे चामरिकायुगले चामरयुग्मे यस्य स तम् । अग्रतोऽग्रभागे । पठतः स्तुतिं कुर्वतः । बन्दिनो बन्दिजनस्य । सुभाषितं कवितासूक्तिम् । उत्कण्टकिते रोमाञ्चिते कपोलफलके गण्डस्थलपट्टे यस्मिन्स तेन । लग्नानि संसक्तानि कर्णोत्पलस्य कर्णाभरणो-

कथाभट्टीया

पृथ्वी को विदीर्ण करने वाले, प्रतिक्षण में कविका ( लगाम ) के खण खण शब्द से युक्त, विशाल नासिका में कविका को तथा ललाटतट पर सुवर्ण को धारण करने वाले, शब्दायमान सुवर्ण की माला से शोभित, अति वेगवान्, कृष्णमुख वानरों के कपोल स्थित रोमराजि के समान श्यामकेश वाले, नीले निर्गुण्डी के पुष्प के समान वर्ण वाले बहुत विशाल अश्व के ऊपर आरूढ, दोनों तरफ चलने वाले सेवकों द्वारा चामरों के आन्दोलन से विभूषित, कर्णभूषण के कमल के केशरों से ही मानो युक्त रोमाञ्चित कपोल वाले मुखचन्द्र द्वारा आगे चलने

दमशकलेनेव मुखशशिना भावयन्तम्, अनङ्गयुगावतारमिव दर्शयन्तम्, चन्द्रमयीमिव सृष्टिमुत्पादयन्तम्, विलासप्रायमिव जीवलोकं जनयन्तम्, अनुरागमयमिव मार्गान्तरमानयन्तम्, शृङ्गारमयमिव दिवसमापादयन्तम्, रागराज्यमिव प्रवर्तयन्तम्, आकर्षणाञ्जनमिव चक्षुषोः, वशीकरणमन्त्रमिव मनसः, स्वस्थावेशचूर्णमिवेन्द्रियाणाम्, असन्तोषमिव कौतुकस्य, सिद्धयोगमिव सौभाग्यस्य, पुनर्जन्मदिव-

जयश्रीः

भूतकमलस्य केसराणि किञ्जल्कानि पक्ष्माणीव तेषां शकलानि खण्डानि यस्मिन् स तेन। मुखशशिना मुखचन्द्रेण। अत्र रूपकालङ्कारः। भावयन्तं विवेचयन्तम्। सुभाषितमित्यर्थः। अनङ्गजन्मना यदुपलक्षितं युगं कालविशेषस्तस्यावतारमिव पृथिव्यामवरोहणमिव दर्शयन्तं विलोकयन्तम्। नूतनमदनकान्तिसादृश्यादिदमुक्तम्। चन्द्रमयीमिन्दुमयीं सृष्टिं रचनामुत्पादयन्तमिव जनयन्तमिवेत्युत्प्रेक्षा तस्य कान्तिमत्त्वेनेदमुक्तम्। विलासप्रायं लीलाबहुलम्। जीवलोकं प्राणिजनं जनयन्तं समुत्पादयन्तमिव। अनुरागमयं प्रेमप्रचुरमिव। मार्गान्तरमन्यं पन्थानमानयन्तं प्रापयन्तम्। शृङ्गारमयमिव विलासप्रायमिव दिवसं दिनमापादयन्तं रचयन्तम्। रागस्यानुरागस्य राज्यमिवाधिकारमिव प्रवर्त्तयन्तं प्रसारयन्तम्। चक्षुषोर्नयनयोराकर्षणार्थं समाकर्षणार्थमञ्जनमिव वशीकरणकज्जलमिव स्थितम्। मनसश्चित्तस्य वशीकरणाय स्वायत्तीकरणाय मन्त्रमिव स्थितम्। स्वस्थस्य निश्चलस्यावेशः प्रवेशस्तस्य चूर्णमिव क्षोद इव। यद्वा स्वस्थं यथा तथा आवेशयतीति तादृशं चूर्णमिव। इन्द्रियाणाम्। तं युवानं दृष्ट्वेन्द्रियाणि निष्क्रियाणि भवन्तीति भावः। कौतुकस्य कौतूहलस्यासन्तोषमिवातुष्टिमिव। एनं पश्यतो जनस्य कौतुकमेव न निवर्त्तत इति भावः। सौभागस्य सुभगत्वस्य सिद्धियोगमिव कार्यसाधकोपाय-

कथाभट्टीया

वाले बन्दिजनों की विरुदावली मे दत्तचित्त, कामदेव के अवतारभूत, चन्द्रमा से प्रकाशित नवीन सृष्टि को ही मानो बतलाने वाले, जीव लोक को अतिविलास में ही मानो लीन करने वाले, अनुरागपूर्ण मार्ग को प्रवृत्त करने वाले, दिवस को शृङ्गार से व्याप्त ही मानो करने वाले, प्रेम के साम्राज्य को विस्तृत करने वाले, सब प्राणियों के नेत्रों को आकृष्ट करने वाले, मन के लिये वशीकरण मन्त्र,

त्नमिव मन्मथस्य, रसायनमिव यौवनस्य, एकराज्यमिव रामणीय-कस्य, कीर्तिस्तम्भमिव रूपस्य, मूलकोषमिव लावण्यस्य, पुण्यकर्म-परिणाममिव संसारस्य, प्रथमाङ्कुरमिव कान्तिलतायाः, सर्गाभ्यास-फलमिव प्रजापतेः, प्रतापमिव विभ्रमस्य, यशःप्रवाहमिव वैदग्ध्यस्य, अष्टादशवर्षदेशीयं युवानमद्राक्षीत् । )

पार्श्वे च तस्य द्वितीयमपरसंश्लिष्टतुरङ्गम्, प्रांशुमुत्तप्ततपनीय-

जयश्रीः

मिव । मन्मथस्य कामस्य पुनर्जन्मनो जन्मान्तरस्य दिवसमिव दिनमिव । यौव-नस्य तारुण्यस्य रसायनमिव महौषधमिव । पारदादिमिवेत्यर्थः । रामणीयकस्य सुन्दरतायाः । एकराज्यमिवैकाधिपत्यमिव । रूपस्य सुरूपस्य कीर्तिस्तम्भमिव यशोवैजयन्तीदण्डमिव । लावण्यस्य सौन्दर्यस्य मूलकोषमिव प्रधानागारमिव । संसारस्य जगतः पुण्यकर्मणः सुकृतकार्यस्य परिणाममिव परिपाकमिव । कान्तिरेव द्युतिरेव लता वल्ली तस्याः प्रथमश्चासावङ्कुरश्चेति प्रथमाङ्कुरः प्रथमोद्गमरूप-मिव । प्रजापतेर्ब्रह्मणः सर्गाभ्यासस्य लोकरचनावृत्तेः फलमिव परिणाममिव । वि-भ्रमस्य विलासस्य प्रतापमिव तेजोराशिमिव । वैदग्ध्यस्य चतुरतायाः । यशःप्रवा-हमिव कीर्तिप्रसरमिव । अष्टादशवर्षादीषन्न्यूनमष्टादशवर्षदेशीयम् । कश्चिद् युवानं तरुणम् । अद्राक्षीदपश्यत् ।

**पार्श्वे इति** । तस्य च यूनः पार्श्वे पार्श्वभागे द्वितीयमपरं जनमद्राक्षीदिति सम्बन्धः । परैरन्यैः संश्लिष्टः स्तम्भितस्तुरङ्गोऽश्वो यस्य स तमपरसंश्लिष्टतुरङ्गं नान्यसमाश्रिताश्वमिति यावत् । प्रांशुमुन्नतम् । उत्तप्तं यत्तपनीयं तस्य स्तम्भस्त-

कथाभट्टीया

इन्द्रियों को निश्चल करने वाले, अतिकौतुक के उत्पादक सौभाग्यशाली, कामदेव के पुनर्जन्म को ही मानो बतलाने वाले, यौवन की उत्पादक ओषधि के समान स्थित, सुन्दरता का साम्राज्य रूप, सुरूप का कीर्तिस्तम्भभूत, लावण्य का मूल भूत, संपूर्ण संसार के पुण्य कर्म का फलस्वरूप, कान्तिरूपीलता का नवीन अङ्कुर, ब्रह्मा जी की सृष्टि के अभ्यास का फलरूप, विलास की प्रौढावस्थारूप, चातुर्य की कीर्तिका प्रसार, अष्टादश वर्ष के एक युवा पुरुष को देखा । **पार्श्वे इति** । इस युवापुरुष के साथ दूसरे घोड़े पर बैठे हुये, उन्नत, सुवर्ण के समान कान्ति

स्तम्भाकारम्, परिणतवयसमपि व्यायामकठिनकायम्, नीचनख-श्मश्रुकचम्, शुक्तिखलतिम्, ईषत्तुन्दिलम्, रोमशोरःस्थलम्, अनुल्बणोदारवेशतया जरामपि विनयमिव शिक्षयन्तम्, गुणानपि गरिमाणमिवानयन्तम्, महानुभावतामपि शिष्यतामिवानयन्तम्, आचारस्याचार्यकमिव कुर्वाणम्, धवलवारबाणधारिणम्, धौतदुकूल-

जयश्रीः

द्वदाकारो यस्य स तमुत्तप्ततपनीयस्तम्भाकारं तप्तसुवर्णस्थूणाकृतिम्। परिणतं परिपक्वं वयोऽवस्था यस्य स तं परिपक्वावस्थं वृद्धमित्यर्थः। तादृशमपि व्यायामेन परिश्रमेण कठिनः कर्कशः कायो देहो यस्य स तम्। अङ्गचालनव्यापारकठिनदेहमिति यावत्। नीचा नता लम्बमाना इति यावत्। नखा नखराः श्मश्रवः कचाः केशाश्च यस्य तम्। लम्बमाननखश्मश्रुकेशमिति यावत्। शुक्तिवत्खलतिर्यस्तं शुक्तिखलतिं शुक्तिवत्खल्वाटम्। "खलतिस्तु खल्वाट ऐन्द्रलुप्तिकः" इति हैमः। ईषत्तुन्दिलं पिचिण्डिलोदरम्। लम्बोदरमिति यावत्। "तुन्दिलस्तुन्दिकस्तुन्दी बृहत्कुक्षिः पिचिण्डिलः" इत्यमरः। रोमाणि सन्त्यस्मिन्निति रोमशं लोमशमुरःस्थलं वक्षःस्थलं यस्य स तम्। रोमयुक्तवक्षःस्थलम्। अनुल्बणोऽनुद्धत उदारो विशुद्धो वेशो नेपथ्यं यस्य स तस्य भावस्तत्ता तया तथोक्तयानुद्धतश्रेष्ठनेपथ्यतयेति यावत्। जरामपि वृद्धत्वमपि। विनयं नम्रतां शिक्षयन्तमिवोपदिशन्तमिव। गुणानपि दयादाक्षिण्यादीनपि गरिमाणं गौरवमानयन्तमिवापादयन्तमिव। अत्रोत्प्रेक्षा। महानुभावतां महाशयतामपि शिष्यतामन्तेवासितामिवानयन्तं प्रापयन्तम्। महानुभावतापि शिक्षां गृह्णात्यस्मात्पुरुषादित्युत्कर्षो ज्ञायते। आचारस्य सदाचारस्य। आचार्यकं गुरुत्वमिव कुर्वाणं विदधतम्। आचार्यलक्षणं च मनुनोक्तम्—

"उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते" इति ( २ अ. १४० )।

धवलः श्वेतवर्णो वारबाणः कञ्चुकस्तं धरतीति तादृशं धवलवारबाणधारिणं

कथामहीया

वाले, वृद्ध अवस्था में स्थित होने पर भी व्यायाम से दृढ शरीर वाले, लम्बे नख व केशों से युक्त, खल्वाट, लम्बोदर, वक्षःस्थल में केशों से युक्त, प्रशान्त वेष विन्यास के कारण वृद्धावस्था को भी मानो विनय सिखाने वाले, गुणों को भी

पट्टिकापरिवेष्टितमौलिं पुरुषम् ।

अथ स युवा पुरोयायिनां, यथादर्शनं प्रतीत्य विस्मितमनसां, कथयतां, पदातीनां सकाशादुपलभ्य दिव्याकृति तत्कन्यायुगलमुपजातकुतूहलः प्रतूर्णतुरगो दिदृक्षुस्तं लतामण्डपोद्देशमाजगाम । दूरादेव च तुरगादवततार । निवारितपरिजनश्च तेन द्वितीयेन साधुना सह

जयश्रीः

श्वेतकञ्चुकभृतम् । धौता प्रक्षालिता निर्मलेति यावत् या दुकूलपट्टिकोत्तरीयपट्टं तया परिवेष्टितः परिवृतो मौलिः शिरो येन स तम् । प्रक्षालितोत्तरीयवस्त्रपरिवृतशिरस्कमिति यावत् । "धौतम्" अत्र "धावु गतिशुद्ध्योः" इति धातोः (धात्वर्थ इति) क्तः ( ३।२।१०२ ) । द्वितीयं पुरुषं मानवं चाद्राक्षीदिति पूर्वक्रियया सम्बन्धः ।

अथेति—अथानन्तरम् । स युवा तरुणस्तुरगारोही । पुरोयायिनामग्रेसराणाम् । दर्शनमनतिक्रम्येति यथादर्शं चक्षुषा निरीक्षणेन प्रतीत्य ज्ञात्वा विस्मितं साश्चर्य मनो मानसं येषां तेषां साश्चर्यमानसानामिति यावत् । कथयतां तद्वर्णनम् । पदातीनां पादचारिणाम् । सकाशात् । दिव्याऽलौकिकाकृतिर्यस्य तत् ताहशमलौकिकाकारम् । तत् कन्यायुगलं सरस्वतीसावित्रीकन्यायुग्ममुपलभ्य विदित्वा । उपजातं समुत्पन्नं कुतूहलं कौतुकं यस्य स प्रत्युत्पन्नकौतुकः । द्रष्टुमिच्छुर्दिदृक्षुः । प्रतूर्णो वेगगामी तुरगोऽश्वो यस्य स वेगगामितुरङ्गः । तं कन्यायुगलीयम् । लतामण्डपस्य लतागृहस्योद्देशं प्रदेशम् । लतागृहभूमिमिति यावत् । आजगाम समाययौ । दूरादेव दूरस्थानादेव तुरगादश्वादवततारावरुरोह । निवारितोऽपसारितः परिजनः सेवकवर्गो येन सः । अपसारितसेवकवर्गः इति यावत् ।

कथाभट्टीया

गौरव से युक्त करने वाले, महानुभावता को भी शिष्य बनाने वाले, सदाचार के भी गुरु होने वाले, श्वेत कञ्चुक को पहिने, निर्मल दुकूल पट्ट से उत्तरीय को धारण करने वाले, दूसरे पुरुष को भी देखा । अथेति—इसके अनन्तर वह युवा पुरुष आगे चलने वाले तथा कन्याओं को देखकर विस्मित हुए एवं उनकी महिमा का वर्णन करने वाले पदातियों के द्वारा दिव्य उस कन्यायुगल को सुनकर कौतुक से आकृष्ट होकर देखने की इच्छा से घोड़े को दौड़ा कर उस लतामण्डप के समीप आपहुंचा । दूर से ही घोड़े से अवतीर्ण हुआ । अपने सेवक

चरणाभ्यामेव सविनयमुपससर्प । कृतोपसंग्रहणौ तौ सावित्री समं सरस्वत्या किसलयासनदानादिना सकुसुमफलार्घ्यावसानेन वनवासोचितेनातिथ्येन यथाक्रममुपजग्राह । आसीनयोश्च तयोरासीना नातिचिरमिव स्थित्वा तं द्वितीयं प्रवयसमुद्दिश्यावादीत्–'आर्य, सहजलज्जाधनस्य प्रमदाजनस्य प्रथमाभिभाषणमशालीनता, विशेषतो

जयश्रीः

साधुना विनीतेन द्वितीयेनापरेण तेन सह साकम् । चरणाभ्यामेव पादाभ्यामेव विनयेन सहितं सविनयं सावनतं यथा तथा । उपससर्प समीपमाजगाम । सावित्री कन्यैका । सरस्वत्यापरया कन्यकया सह । कृतं विहितमुपसंग्रहणमभिवादनं ययोस्तौ कृताभिवादनौ । "उपसंग्रहणं धीराः कथयन्त्यभिवादनम्" इत्युपसंग्रहणलक्षणम् । तौ युवप्रवयसौ । दधीचविकुक्षिनामानौ । किसलयानां पल्लवानामासनं तस्य दानं वितरणमादिर्यस्य तत्तेन किसलयासनदानादिना पल्लवासनप्रदानपूर्वकेण । कुसुमानि च फलानि च कुसुमफलानि तैः सहितं सकुसुमफलमर्घ्यं पूजा तदवसाने समाप्तौ यस्मिंस्तत्तेन तथोक्तेन पुष्पफलसहितपूजापर्यवसानेनेति यावत् । वनवासस्य काननिवासस्योचितेन योग्येन । अतिथिषु साधु इत्यातिथ्यं प्राघुणिकोचितं कर्म तेन । क्रममनतिक्रम्य यथाक्रमं क्रमशः । उपजग्राहापूजयत् । आसीनयोरुपविशतोस्तयोरासीनोपविष्टा सावित्री नातिचिरमिव न बहुकालम् । स्थित्वोपविश्य तं द्वितीयं प्रवयसं वृद्धमपरं जनम् । उद्दिश्य सम्बोध्य । अवादीत् कथयामास । हे आर्य ! सज्जन ! सहजं स्वाभाविकं लज्जैव व्रीडैव धनं वित्तं यस्य स तस्य स्वाभाविकव्रीडावित्तस्येति यावत् । प्रमदाजनस्य स्त्रीजनस्य । प्रथमं

कथाभट्टीया

वर्ग को ठहरा कर उस दूसरे सज्जन वृद्ध पुरुष के साथ वह युवा पैदल ही विनय सहित वहाँ गया । सावित्री ने सरस्वती के साथ अभिवादन करने वाले उन दोनों पुरुषों का पल्लवों के आसन पर बैठा कर पुष्प, फल व अर्घ आदि बनवास के योग्य अतिथिसत्कार किया । इसके अनन्तर थोड़ी देर के बाद सावित्री ने द्वितीय उस वृद्ध सज्जन पुरुष से पूछा । आर्य ! स्वभाव से ही अतिलज्जाशील स्त्रीजन का पुरुष के साथ प्रथम भाषण कुलीनता नहीं है । विशेष करके बन की मृगी के समान मुग्ध कुलीन कुमारियों का पुरुष के साथ

वनमृगीमुग्धस्य कुलकुमारीजनस्य । केवलमियमालोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः । प्रथमदर्शने चोपायनमिवोपनयति सज्जनः प्रणयम् । अप्रगल्भमपि जनं प्रभवता प्रश्रयेणार्पितं मनो मध्विव वाचालयति । अयत्नेनैव चातिनम्रे

जयश्रीः

तावदादौ । अभिभाषणं सम्भाषणं पुरुषेण सहेति शेषः । अशालीनताऽकुलीनता । सदाचाराभाव इति यावत् । विशेषतोऽतिशयेन । वनमृगीवत्काननहरिणीवन्मुग्धस्य मूढस्य । कुलकुमारीजनस्याभिजनवत्कन्याजनस्य । परेण मानवेन सह सम्भाषणमनुचितमिति शेषः । केवलं परम् । आलोकनेन दर्शनेन कृतार्थं कृतकृत्यं तस्मै । दर्शनकृतसफलजनुषे नेत्राय । स्पृहयन्ती स्पृहां कुर्वन्ती । "स्पृहेरीप्सितः" इत्यनेन चतुर्थी । अत्र राजलक्ष्मीटीकाकृता–"आलोकनेन कृतार्थस्तस्मै आलोकनकृतार्थाय चक्षुषे लोचनाय" इति व्याख्यानावसरेऽभिहितम् । तत्र कृतार्थपदस्य चक्षुर्विशेषणतया नपुंसकलिङ्गतोचितेति विज्ञेयम् । उदन्तस्य युष्मद्वृत्तान्तस्य श्रवणे आकर्णने कुतूहलं कौतुकं यस्याः सा । उदन्तश्रवणकुतूहलिनी = वृत्तान्ताकर्णनकौतुकिनीति यावत् । श्रोत्रवृत्तिः श्रवणेन्द्रिययुगलम् । प्रेरयति प्रवर्तयति युष्माकं दर्शनेन नयने तृप्तेऽतः श्रवणेन्द्रियमपि श्रोतुमीहते वृत्तान्तमिति भावः । प्रथमदर्शने प्रथमविलोकने । सज्जनः सत्पुरुषः । उपायनमिव प्राभृतमिव । प्रणयं स्नेहम् । उपनयति उपैति । सन्तः प्रथमभाषणेनैव स्निह्यन्तीति भावः । प्रभवता प्रभुणा प्रभावशालिना वा प्रश्रयेण प्रणयेन "प्रणयप्रश्रयौ समौ" इत्यमरः । अर्पितं दत्तं मनश्चित्तम् । मध्विव मद्यमिव अप्रगल्भमपि अप्रौढमपि । जनं मानवं वाचालयति मुखरीकुरुते । मधुपक्षे—प्रभवता स्वामिना प्रश्रयेण स्नेहेन । अर्पितं वितीर्णं मध्वपि मद्यमपि । अप्रगल्भमपि लज्जाशीलमपि जनं प्रमदाजनं वाचालयति चञ्चलं कुरुते । किञ्चन जल्पतीति यावत् । अत्र श्लेषानुप्राणितोपमालङ्कारः । विश्रम्भो विश्वासः । अयत्नेनैव प्रयासं विनैव अतिनम्रे प्रह्वे । साधौ सज्जने । गुणो विनया-

कथाभट्टीया

अभिभाषण तो अति निन्दनीय है । तथापि आपके वृत्तान्त के श्रवण में कौतुकिनी यह श्रवणेन्द्रिय आपके दर्शन से कृतकृत्य नेत्र की ईर्ष्या से मुझको भाषण में प्रवृत्त कराती है । सज्जन पुरुष प्रथम दर्शन में उपायन के समान स्नेहरूप

साधौ धनुषीव गुणः परां कोटिमारोपयति विस्रम्भः। जनयन्ति च विस्ममतिधीरधियामदृष्टपूर्वा दृश्यमाना जगति स्रष्टुः सृष्ट्यतिशयाः। यतस्त्रिभुवनाभिभावि रूपमिदमस्य महानुभावस्य। सौजन्यपरतन्त्रा चेयं देवानां प्रियस्यातिभद्रता कारयति कथां न तु युवतिजने सहोत्था तरलता। तत्कथयागमनेनापुण्यभाक्कतमो विजृम्भित-

जयश्रीः

दिः, प्रत्यञ्चा च। धनुषीव शरासने इव परां कोटिमुन्नतावस्थां धनुःपक्षे परामन्त्यां कोटिं कोणम्। आरोपयति प्रापयति। धनुरप्यतिनम्रं कुब्जमित्यर्थः। श्लेषानुप्राणितोपमा। जगति लोके दृश्यमाना विलोक्यमानाः। पूर्वमदृष्टा इत्यदृष्टपूर्वा अनवलोकितपूर्वाः। स्रष्टुर्विधातुः सृष्ट्यतिशया रचनावैचित्र्याणि। अतिधीरा निश्चला स्थिरा धीर्बुद्धिर्येषां तेषां स्थिरबुद्धीनामपि विस्मयमाश्चर्यं जनयन्ति समुत्पादयन्ति। यतो यस्मात्कारणात्। अस्य महानुभावस्य महाप्रभावस्य यूनो दधीचस्य। इदं रूपं सुरूपम्। त्रिभुवनमभिभवतीति तादृशं त्रिभुवनाभिभावि लोकत्रयरूपातिशायिरूपं वर्त्तत इति शेषः। देवानां प्रियस्येति पूजावचनम्। देवानाममराणां प्रियस्येष्टस्य। "देवानां प्रियः" इति वाक्यं बौद्धसाहित्ये अशोकवर्धनमहाराजशिलालेखेषु च पूज्यताद्योतकं वर्त्तते। परन्तु द्वादशशतब्द्यां काव्यप्रकाशकारादिभिरिदं वाक्यं निन्दाप्रत्यायकतया प्रयुज्यते स्म। अस्य यूनः। सुजनस्य भावः सौजन्यं तस्य परतन्त्रा सौजन्यपरतन्त्रा सुजनताधीनता इयं दृश्यमानातिभद्रता सज्जनता कथां वार्तां कारयति प्रचारयति। न तु युवतिजने तरुणीजने, सहोत्था सहोत्पन्ना। तरलता चाञ्चल्यम्। कथां कारयति। तत्तस्मात्कारणात्। कथय वद यत् आगमनेनात्रायातेन न पुण्यं भजतीत्यपुण्यभाक् हतभाग्यः। विजृम्भितोत्पन्ना विरह-

कथामञ्जरी

उपहार देते हैं। प्रभावशाली प्रेम से अर्पित मन मद्य के समान अप्रौढ पुरुष को भी प्रौढ बना कर बहुभाषी बना देता है। परस्पर का विश्वास अतिनम्र सज्जन पुरुष को बिना परिश्रम के ही उन्नत कोटि में आरूढ करता है। यथा प्रत्यञ्चा (गुण) विनम्र धनुष के कोणे को प्राप्त हो जाती है। ब्रह्मा की विचित्र सुन्दर अदृष्टपूर्व रचनायें देखने पर अतिधीर पुरुषों को भी विस्मित करती हैं। क्यों कि इस युवकमहानुभाव का सौन्दर्य त्रिभुवन में स्थित पुरुषों से भी अधिक उत्तम है। मैं

विरहव्यथः शून्यतां नीतो देशः । क्व वा गन्तव्यम् । कस्य वायमपहृतहरहुङ्काराहङ्कारोऽपर इवानन्यजो युवा । किंनाम्नः समृद्धतपसः पितुरयममृतवर्षी कौस्तुभमणिरिव हरेर्हृदयमाह्लादयति । का चास्य त्रिभुवननमस्या प्रभातसन्ध्येव महतस्तेजसो जननी । कानि वास्य पुण्यभाञ्जि भजन्त्यभिख्यामक्षराणि । आर्यपरिज्ञानेऽप्ययमेव क्रमः

जयश्रीः

स्य वियोगस्य व्यथा खेदो यस्य स विजृम्भितविरहव्यथः समुत्पन्नवियोगखेदः । कतमो देशो जनपदः शून्यतां भवद्राहित्यं नीतः प्रापितः । कुतः समायातौ भवन्ताविति भावः । क्व वा कुत्र वा च गन्तव्यं यातव्यम् । अपहृतो नाशितः, हरस्य शिवस्य हुङ्काराहङ्कारो हुङ्कारगर्वो येन स तथोक्तः । नाशितशिवहुङ्कारगर्वः । अपरोऽन्यः । अनन्यज इव काम इव । "कुसुमेषुरनन्यजः" इत्यमरः । अयं युवा तरुणः कस्य वंशस्य स्वाम्यस्ति । किंनाम्नः किमभिधेयस्य । समृद्धं प्रवृद्धं तपो यस्य स तस्य समृद्धतपसः प्रवृद्धतपश्चर्यस्य । पितुर्जनयितुः । हरेर्विष्णोः कौस्तुभमणिरिव कुं भुवं स्तुभ्नातीति, कुं भुवं स्तोभते कुस्तुभो विष्णुः यद्वा कुस्तुभोऽब्धिस्तत्र भवः । अमृतवर्षी सुधास्रावकोऽयं युवा कस्य हृदयं मानसमाह्लादयति सुखयति । कौस्तुभमणिरपि सुधावर्षी । महतो विशालस्य तेजसो ज्योतिषो जननी समुत्पादिका । त्रिभुवनेन लोकत्रयेण नमस्या प्रणम्या प्रभातसन्ध्येव प्रातःसन्ध्येव । अस्य महतस्तेजसो यूनो जननी माता कास्ते । पुण्यं भजन्तीति पुण्यभाञ्जि सुकृतसेवीनि । कानि । अक्षराणि वर्णाः अस्य यूनः । अभिख्यां नामधेयं भजन्ति सेवन्ते । "अभिख्या नामशोभयोः" इत्यमरः । आर्यस्य भवतः परिज्ञाने संवि-

कथाभट्टीया

युवति-स्त्रियों के स्वाभाविक चाञ्चल्य के कारण भाषण नहीं करती हूं किन्तु सौजन्य के अधीन आपकी सज्जनता मुझे संभाषणे में प्रवृत्त कराती है । अतः श्रीमान् कहें कि अपुण्यशील कौनसा देश आपके विरह से व्याकुल हुआ है। अब आगे कहां जाना है। भगवान् शंकर के गर्व को नष्ट करने वाले कामदेव के समान सुन्दर यह दूसरे युवक पुरुष किस वंश के मौक्तिक है। अमृतवर्षी यह युवा विष्णुकी कौस्तुभमणि के समान किस तपस्वी पिता के हृदय को आल्हादित करता है । अतिविशाल तेज को सुमुत्पन्न करने वाली प्रातःकालीन संध्या के समान त्रिभुवन

कौतुकानुरोधिनो हृदयस्य' इत्युक्तवत्यां तस्यां प्रकटितप्रश्रयोऽसौ प्रतिव्याजहार—'आयुष्मति सतां हि प्रियंवदता कुलविद्या। न केवलमाननं हृदयमपि च ते चन्द्रमयमिव सुधाशीकरशीतलैरानन्दयति वचोभिः। सौजन्यजन्मभूमयो भूयसा शुभेन सज्जननिर्माणशिल्पकला भवादृश्यो जायन्ते। दूरे तावदन्योन्यस्यालापनमभिजातैः सह

जयश्रीः

दि। अव्ययमेव। कौतुकमनुरुणद्धीति तादृशस्य कौतुकानुरोधिनः कुतूहलानुबन्धिनः। हृदयस्य मम मानसस्य। क्रमो नियम प्रश्ने भवतामिति शेषः। इत्येवंप्रकारेणोक्तवत्यां कथितवत्यां तस्यां सावित्र्यां प्रकटितः प्रकाशितः प्रश्रयो नम्रता येन स तथोक्तः प्रकाशितप्रणय इति यावत्। असौ प्रवयाः प्रतिव्याजहार प्रत्युवाच। हे आयुष्मति चिरञ्जीविनि! हि नूनं सतां सज्जनानां प्रियंवदतीति प्रियंवदस्तस्य भावस्तत्ता। "प्रियवशे वदः खच्" इति खच्प्रत्ययः। मधुरभाषिता। कुलस्य स्ववंशस्य विद्या ज्ञानम्। कुलविद्या कुलधर्म इति यावत्। केवलमेकम्। ते आननं मुखमेव न चन्द्रमयं चन्द्ररचितं किन्तु हृदयमपि मानसमपि तेच न्द्रमयमिवेन्दुमयमिव सुधाया अमृतस्य शीकरा बिन्दवस्तद्वच्छीतलानि शीतानि तैः सुधाशीकरशीतलैरमृतबिन्दुशीतैः। वचोभिर्वचनैः। आनन्दयति आह्लादयति। जन्मनो भूमयो जन्मभूमयः सौजन्यस्य सौमनस्यस्य जन्मभूमयः सौजन्यजन्मभूमयः सज्जनतास्पदानि। सज्जनानां सत्पुरुषाणां निर्माणं रचना तस्मिन् शिल्पकला शिल्पविद्या तथोक्ता। सत्पुरुषसर्गशिल्पोपाय इति यावत्। एतादृश्यो भवादृश्यो भवद्विधा भूयसा महता शुभेन पुण्येन जायन्ते समुत्पद्यन्ते। अन्योन्यस्य परस्परस्यालापनं सम्भाषणं तावद् दूरे तिष्ठतु। अभिजातैः कुलीनैः सह।

कथाभट्टीया

में पूजनीय इसकी माता कौन है। कौन से पवित्र अक्षर इसके नाम की सेवा करते हैं। आपके परिचय में भी कौतुकी इस हृदय का यह ही क्रम है। यह सावित्री के कहने पर सविनय इस वृद्ध पुरुष ने उत्तर दिया। हे आयुष्मति! प्रियवचन कहना सत्पुरुषों का कुल धर्म है। तेरा मुख ही नहीं किन्तु हृदय भी चन्द्रमय ही है अतः वह हृदय अमृत बिन्दुओं के समान शीतल वचनों से आनन्दित करता है। अतिपुण्य के प्रभाव से सौजन्य के निवास स्थान तथा सज्जनता के

दृशोऽपि मिश्रीभूता महतीं भूमिमारोपयन्ति । श्रूयताम्—अयं खलु भूषणं भार्गववंशस्य, भगवतो भूर्भुवःस्वस्त्रितयतिलकस्य, अदभ्रप्रभावस्तम्भितजम्भारिभुजस्तम्भस्य, सुरासुरमुकुटमणिशिलाशयनदुर्ललितपादपङ्केरुहस्य निजतेजःप्रसरप्लुष्टपुलोम्नश्च्यवनस्य वहिर्वृत्तिजीवितं दधीचो

जयश्रीः

"अभिजातस्तु कुलजे बुधे" इति नानार्थेऽमरः । मिश्रीभूता मिलिता दृशोऽपि नयनान्यपि । महतीं पराम् । भूमिं स्थानमारोपयन्ति प्रापयन्ति । भवतां दृष्टिनिक्षेपेणैव वयमुन्नतमास्पदमापिताः स्मेति वास्तविकार्थः । नर्मपक्षे तु भवतां युवतीनामस्माकमुपरि दृष्टिनिक्षेपः कटाक्ष इति यावत् महतीं भूमिं परां कोटिमासादयतीति ज्ञेयम् । प्रकृतं श्रूयतामाकर्ण्यताम् । अयं युवा दधीचः खलु । भार्गववंशस्य भृगुकुलस्य भूषणमलङ्कारः । भूश्च पृथ्वी च भुवश्च पातालं च स्वश्च स्वर्गश्चेति भूर्भुवःस्वस्तेषां त्रितयं त्रयं तेषां तिलकमिव तिलकं भूषणं तथोक्तस्य । पृथिवीपातालस्वर्गभूषणभूतस्येति यावत् । भगवत ऐश्वर्यादिमतः । अदभ्रोऽनल्पो यः प्रभाभावो माहात्म्यं तेन स्तम्भितोऽवरोधितो जम्भारेरिन्द्रस्य भुजो हस्त एव स्तम्भः स्थूणा येन स तथोक्तस्य । अनल्पमाहात्म्यावरोधितेन्द्रहस्तस्थूणाविशेषस्येति यावत् । अश्विनीकुमाराभ्यां यज्ञानधिकारिभ्यामपि यज्ञभागभुजावावां कुर्विति चिरं प्रार्थितश्च्यवनस्तथेति स्वीकृत्य तयोः प्रार्थनाम् , ताभ्यां यज्ञभागं दददिन्द्रेणोद्यतवज्रेण रोषितः । ततोऽनेनास्य सवज्रो भुजः स्तम्भित इति पौराणिकी कथात्रानुसन्धेया । सुराणां देवानामसुराणां दैत्यानां च मुकुटमणयः शेखरस्थरत्नान्येव शिलाशयनानि पाषाणशय्यास्तैर्दुर्ललितं दुर्लभ्यं पादपङ्केरुहं चरणकमलं यस्य स तस्य । देवदानवशेखररत्नपाषाणशय्यादुर्लभ्यचरणकमलस्येति यावत् । निजं स्वीयं तेजः प्रतापस्तेन प्लुष्टो दग्धः पुलोमा राक्षसः शचीपितेति यावत् । येन स

कथाभट्टीया

समुत्पादक आप जैसे महानुभाव उत्पन्न होते हैं । आपस में संभाषण तो दूर रहा कुलीनों के साथ नेत्र मिश्रण होने से ही अत्यन्त उत्कर्ष की प्राप्ति होती है । सुनिये ! यह युवा भार्गव वंश का भूषण है । भूःभुवः और स्वः इन तीनों लोकों के तिलकभूत, तथा अनल्प प्रभाव से इन्द्र के भुजस्तम्भ को अवरुद्ध करने वाले, देव व दानवों के मुकुटमणियों से वन्दनीय चरणकमल वाले, अपने तेज के

नाम तनयः। जनन्यस्य जितजगतोऽनेकपार्थिवसहस्रानुयातस्य शर्यातस्य सुता राजपुत्री त्रिभुवनकन्यारत्नं सुकन्या नाम। तां खलु देवीमन्तर्वत्नीं विदित्वा वैजनने मासि प्रसवाय पिता पत्युः पार्श्वात्स्वगृहमानाययत्। असूत च सा तत्र देवी दीर्घायुषमेनम्। अनेह-

जयश्रीः

तस्य। स्वीयप्रतापदग्धपुलोमाख्यराक्षसस्येति यावत्। पुरा भृगोः पत्नी गर्भवती पुलोम्ना राक्षसेन ह्रियमाणा आसीत्। तदानीं गर्भस्थोऽसौ महामुनिर्गर्भाच्चुच्योत। एवमन्वर्थनाम्नानेन च्यवनेन राक्षसोऽसौ कोपदृष्ट्या दग्ध इति पुराणम्। च्यवनस्य भृगुपुत्रस्य महर्षेः। "च्यवन ऋषिर्भवति, च्यावयिता स्तोमानां च्यवानमित्यप्यस्य निगमा भवन्ति" इति निरुक्ते यास्कश्च्यवननामनिर्वचनं चक्रे। बहिर्वृत्ति बहिश्चरम्। जीवितं प्राणाः। अयं युवा दधीचो नाम तनयः पुत्रश्च्यवनस्येति भावः। अस्य जननी माता जितं विजितं जगत् संसारो येन स तस्य तथोक्तस्य जितसंसारस्येति यावत्। अनेके बहवो ये पार्थिवा राजानस्तेषां सहस्रं तेनानुयातमनुगतं तस्य तथोक्तस्य बहुलराजसहस्रानुगतस्य शर्यातस्य तदाख्यस्य। सुता पुत्री। त्रिभुवने त्रिलोक्यां या कन्यास्तासु रत्नं श्रेष्ठम्। त्रिलोकीकन्याप्रवरमिति यावत्। राजपुत्री राजकुमारी सुकन्या तदाख्या। अस्य दधीचस्य जननी। अस्तीति शेषः। तां देवीं सुकन्यामन्तर्वत्नीं गर्भवतीं विदित्वा विज्ञाय। वैजनने मासि प्रसवमासे "सूतिमासो वैजननः" इत्यमरः। प्रसवाय सन्तानोत्पादनाय पिता शर्यातः पत्युश्च्यवनस्य पार्श्वात् समीपात् स्वगृहं स्वसदनमानाययत् प्रापयत् स्वपुरुषैरित्यर्थः। तत्र पितुर्गेहे सा देवी सुकन्याख्या दीर्घायुषं चिरजीविनमेनं दधीचम्। असूत सुषुवे। तत्रैव राजगृहे राजभवने चानेहसा कालेन।

कथाभट्टीया

प्रभाव से शची के पिता ( पुलोमा ) के विनाशक, भगवान् च्यवन ऋषि का बहिश्चर प्राण यह दधीच नामक पुत्र है। संसार में विजयी तथा अनेक सहस्र पार्थिवों से अनुगत शर्यातराजा की पुत्री सुकन्या इसकी माता है। पिता ने इस पुत्री को गर्भवती जान कर प्रसव के मास में प्रसव के लिये पतिगृह से अपने गृहमें बुलवालिया। सुकन्याने अपने पिता के गृहपर इस चिरजीवी को उत्पन्न किया। अपने बन्धुवर्ग को आनन्दित करने वाला कमल के समान सुन्दर नेत्र

सावर्धत तत्रैवायमानन्दितज्ञातिवर्गो बालस्तारकराज इव राजीवलोचनो राजगृहे । भर्तृभवनमागच्छन्त्यामपि दुहितरि नासेचनकदर्शनमिममुञ्चन्मातामहो मनोविनोदनं नप्तारम् । अशिक्षतायं तत्रैव सर्वा विद्याः सकलाश्च कलाः कालेन चोपारूढयौवनमिममालोक्याहमिवासावप्यनुभवतु मुखकमलावलोकनानन्दमस्येति मातामहः कथ-

जयश्रीः

आनन्दितः आह्लादितो ज्ञातिवर्गो बन्धुनिवहो येन स तथोक्तः। आह्लादितबन्धुनिवह इति यावत् । अयं बालः शिशुर्दधीचः । राजीवलोचनः कमलनयनः । तारकराज इव चन्द्र इव । अवर्धतैधत । भर्तृभवनं पतिगृहमागच्छन्त्यामपि समायान्त्यामपि । दुहितरि सुतायां सुकन्यायाम् । मातामहः शर्यातः । आसेचनकं दर्शनं यस्य स तमासेचनकदर्शनमतृप्तिकरदर्शनमिति यावत् । "न जायते यत्र तृप्तिस्तदासेचनकं विदुः" इत्यासेचनकमुक्तम् । मनोविनोदनं चित्ततृप्तिकरम् । इमं नप्तारं दौहित्रम् । "नप्त्री पौत्री सुतात्मजा" इत्यमरः । नामुञ्चत् न तत्याज । दौहित्रं स्वगृहे न प्रेषितवानिति भावः । अयं दधीचः तत्रैव मातामहकुले एव । सर्वा विद्याः सर्वाः समग्राश्च कला गीतनृत्यवाद्यादीनि । अशिक्षत शिक्षितवान् । कालेन समयेन चोपारूढं समधिगतं यौवनं तारुण्यं येन स तमुपारूढयौवनं सञ्जाततारुण्यम् । एनं दधीचम् । आलोक्य दृष्ट्वा मातामहः शर्यातः । असावपि च्यवनोऽपि । अहमिव । अस्य स्वसुतस्य मुखकमलस्य मुखारविन्दस्यावलोकनेन दर्शनेनानन्दमाह्लादम् । वदनारविन्ददर्शनाह्लादमिति यावत् । अनुभवतु जानातु ।

कथाभट्टीया

वाला यह बालक अपने मातामहके गृह पर ही समय पाकर इतना बडा हुवा है । मातामहने पतिगृह पर अपनी पुत्री के जाने के समय मनोविनोदक सुन्दर इस दौहित्र को नही भेजा । इसने वहां ही सब विद्या और कलाओं की शिक्षा प्राप्त की । समय पाकर तरुण हुए इसको देखकर मातामहने "मेरे समान इसका पिता भी मुखकमल के दर्शन के आनन्द को प्राप्त करै" यह विचार करके बड़े कष्ट से इसको पिता ( च्यवनऋषि ) के निकट भेजा है । और आप मुझे भी सुगृहीत नामा राजा शर्यात का विकुक्षि नाम का आज्ञाकारी सेवक जानिए । राजा शर्यात

ङ्कुथमप्येनं पितुरन्तिकमधुना व्यसर्जयत् । मामपि तस्य देवस्य सुगृहीतनाम्नः शर्यातस्याज्ञाकारिणं विकुक्षिनामानं भृत्यपरमाणुमवधारयतु भवती । पितुः पादमूलमायान्तं मया साभिसारमकरोत्स्वामी । तद्धि नः कुलक्रमागतं राजकुलम् । उत्तमानां च चिरन्तनता जनयत्यनुजीविन्यपि जने कियन्मात्रमपि मन्दाक्षम् । अक्षीणः खलु दाक्षिण्यकोशो महताम् । इतश्च गव्यूतिमात्रमिव पारेशोणं तस्य भगवत-

जयश्रीः

इति विचार्याधुना साम्प्रतम् । एनं दधीचं पितुश्च्यवनस्यान्तिकं निकटं व्यसर्जयत् प्राहिणोत् । मामपि प्रवयसमपि जनम् । सुगृहीतं नाम यस्त तस्य सुगृहीताभिधेयस्य । तस्य शर्यातस्य देवस्य शर्याताख्यस्य राज्ञः । आज्ञाकारिणं समादेशकारिणम् । विकुक्षिनामानं विकुक्षिनामकं भृत्यपरमाणुं क्षुद्रसेवकम् । भवती सावित्री । अवधारयतु जानातु । स्वामी प्रभुः । पितुश्च्यवनस्य पादमूलं निकटमायान्तमागच्छन्तमिमम् । मया सह साभिसारं ससहायमकरोत् चकार । तद्धि राजकुलं शर्यातमहाराजकुलम् । नोऽस्माकम् । कुलक्रमेण वंशपारम्पर्येणागतं प्राप्तमस्ति । तस्मिन् राजकुलेऽस्माकं पारम्परिकं सेवकत्वं वर्त्तत इति भावः । उत्तमानां महतां चिरन्तनता प्राचीनता । अनुजीविन्यपि सेवकवर्गेऽपि जने मानवे कियन्मात्रमपि स्वल्पमात्रं मन्दाक्षं लज्जाम् । "मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा" इत्यमरः । जनयति समुत्पादयति । चिरानुगत्येन सम्यक्भृत्यभावे महतां लज्जा जायते, इति सेवकमपि मां स्वनप्तुः सहचरं चकार स्वामीति भावः । यतः खलु महतां दाक्षिण्यकोश औदार्यभाण्डारम् । अक्षीणोऽनपायः । इतश्च गव्यूतिमात्रमिव क्रोशद्वयमितदूरस्थम् । "गव्यूतिः स्त्री क्रोशयुगम्" इत्यमरः । शोणस्य पारे इति

कथाभट्टीया

ने मुझ को इसे पहुंचाने के लिये भेजा है । मैं वंशपराम्परा से इस राजकुलका सेवक हूं । सेवक वर्ग में भी प्राचीनता के कारण महापुरुषों को कुछ लज्जा होती है इसलिये मुझको अपने दौहित्र का सहचर बना कर भेजा है । क्योंकि महापुरुषों की उदारता अक्षीण होती है । यहां से दो क्रोशपर शोण नद के दूसरे किनारे कुबेर के उद्यान के समान सुन्दर भगवान् च्यवन का च्यावन नामक वन निवास स्थान है । हमको वहां ही जाना है । यदि समय हो, आनुकूल्य हो, आप

श्र्यवनस्य स्वनाम्ना निर्मितव्यपदेशं च्यावनं नाम चैत्ररथकल्पं काननं निवासः। तदवधिश्चेयं नौ यात्रा। यदि च गृहीतक्षणं दाक्षिण्यमनवहेलं वा हृदयमस्माकमुपरि भूमिर्वा प्रसादानामयं जनः श्रवणार्हो वा, ततो न विमाननीयोऽयं यः प्रथमः प्रणयः कुतूहलस्य। वयमपि शुश्रूषवो वृत्तान्तमायुष्मत्योः। नेयमाकृतिर्दिव्यतां व्यभिच-

जयश्रीः

पारेशोणं शोणनदीपरतीरे तस्य भगवतश्च्यवनस्य महर्षेः स्वनाम्ना स्वाभिधेयेन। निर्मितो व्यपदेशोऽभिधानं यस्य तत् तादृशं कृताभिधेयमिति यावत्। च्यावनं च्यवनस्येदं च्यावनं च्यवननाम्ना विख्यातमित्यर्थः। नाम चैत्ररथकल्पं कुबेरोद्यानादीषन्न्यूनम्। "अस्योद्यानं चैत्ररथम्" इत्यमरः। अनेन चैत्ररथकल्पपदस्य नन्दनोद्यानसदृशमिति व्याचक्षाणा राजलक्ष्मीकारा भ्रान्ता एवेति बोध्यम्। चैत्ररथपदस्य कुबेरोद्यानवाचित्वात्। नन्दनोद्यानं तु शचीपतेरिति "हय उच्चैःश्रवाः, सूतो मातलिः, नन्दनं वनम्" इत्यमरकोशतो ज्ञेयम्। एतादृशं काननं वनं च्यवनस्य निवास आवासभूमिः। तत्काननमेवावधिर्मर्यादा यस्याः सा तादृशी तत्काननपर्यन्तेति यावत्। नावावयोः। इयं यात्रा गमनम्। यदि गृहीतः स्वीकृतः क्षणोऽवसरो यस्य तत्तथोक्तं स्वीकृतावसरमिति यावत्। दाक्षिण्यमानुकूल्यम्। यद्वा अस्माकमुपरि। अनवहेलं नावज्ञम्। हृदयं मानसमास्ते। यद्वा प्रसादानां युष्माकमनुग्रहाणाम्। भूमिरास्पदं वा अयं जनः श्रवणार्हो वा युष्मद्वृत्तान्ताकर्णनयोग्यो वा। तदायं कुतूहलस्य कौतुकस्य यः प्रथमः प्रारम्भिकः प्रणयः प्रार्थना न विमाननीयो नोपेक्षणीयोऽनादरणीयो नेति भावः। वयमपि। आयुष्मत्योः सावित्रीसरस्वत्योः। वृत्तान्तं शुश्रूषवः श्रोतुमिच्छवो भवामः। इयं दृश्यमाना युवयोराकृतिराकारो दिव्यतां देवतात्वं न व्यभिचरति नातिक्रामति। युवां दिव्ये केचिदिति

कथाभट्टीया

के हृदय में अवज्ञा न हो, आपकी कृपा का यह जन स्थान हो वा श्रवण के योग्य हो तो कौतुक की इस प्रथम प्रार्थना की उपेक्षा' नहीं करनी चाहिए। हम भी आपके वृत्तान्त को सुनना चाहते है। आप आकृति से दिव्य ( देवता ) मालुम होते है। हमारा हृदय आपके गोत्र व नाम को सुनना चाहता है। इसलिये कहिए जन्म से किस वंश को अलंकृत किया है। आपके पास परस्पर विरुद्ध

रति। गोत्रनामनी तु श्रोतुमभिलषति नौ हृदयम्। तत्कथय कतमो वंशः स्पृहणीयतां जन्मना नीतः। का चेयमत्रभवती भवत्याः समीपे समवाय इव विरोधिनां पदार्थानाम्। तथा हि। सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च, पुण्डरीकमुखी हरिणलोचना च, बालातपप्र-

जयश्रीः

मन्ये। नावावयोर्हृदयं मानसं गोत्रं वंशो नामाभिधेयं चेति गोत्रनामनी वंशाभिधाने तु श्रोतुमाकर्णयितुमभिलषति समीहते। तत्तस्मात् कथय वद। कतमो वंशोऽन्वयो जन्मना स्वजनुषा स्पृहणीयतां वाञ्छनीयतां नीतः प्रापितः। भवत्याः सावित्र्याः समीपे विरोधिनां परस्परं प्रतिकूलानां पदार्थानां वस्तूनां समवाय एकत्रावस्थानमिव। इयमत्रभवती पूज्यापरा का तिष्ठति।

तथा हीत्यनेन विरोधिपदार्थानामेकत्रावस्थानमाह स्म। संनिहितः समीपावस्थो बालः प्रत्यग्रोऽन्धकारस्तमो यस्याः सा तथोक्ता समीपस्थनवीनतिमिरेति यावत्। भास्वतः सूर्यस्य मूर्तिः प्रतिमा। सूर्यमूर्तिनिकटेऽन्धकाराभावो भवति सोऽत्र नास्तीति विरोध उपमितसमासे। बहुव्रीहिसमासे तु तत्परिहार इति ज्ञेयम्। विरोधपरिहारपक्षे—संनिहिताः समीपस्था बालाः केशा एवान्धकारा यस्याः सा निकटवर्तिकेशान्धकारेति यावत्। भास्वन्ती देदीप्यमाना मूर्तिः स्वरूपं यस्याः सा तादृशी। अत्र विरोधाभासोऽलङ्कारो ज्ञेयः। "आभासत्वे विरोधस्य विरोधाभास इष्यते" इति कुवलयानन्दोक्तलक्षणात् (७६ कारिका)। पुण्डरीक इव व्याघ्र इव मुखं वदनं यस्याः सा पुण्डरीकमुखी व्याघ्रमुखी। "व्याघ्रेऽपि पुण्डरीको ना" इत्यमरः। हरिणो मृगो लोचनयोर्यस्याः सा हरिणलोचना नेत्रस्थमृगा। या व्याघ्रमुखी सा कथं हरिणलोचनेति विरोधः। तत्परिहारपक्षे तु—पुण्डरीकं सिताम्भोजं तद्वन्मुखं वदनं यस्याः सा सिताम्भोजमुखी। हरिणलोचना मृगाक्षीति ज्ञेयम्। बालातपस्य नवसूर्यातपस्य प्रभायाः कान्तेर्धरा धारिणी नवसूर्यातपकान्ति-

कथाभट्टीया

पदार्थों के समूह के समान यह द्वितीय युवति कौन है। अब कवि विरोधाभास अलङ्कार से सरस्वती का वर्णन करता है। तथाहि—यह नवीन अन्धकार से युक्त देदीप्यमानमूर्ति है। केश रूपी अन्धकार से युक्त तथा देदीप्यमान मूर्ति यह विरोध के परिहार का अर्थ है। इसी तरह आगे भी समझना चाहिए। व्याघ्र के समान मुखवाली तथा मृगयुक्त नेत्रों से युक्त है। परिहार पक्ष में—पुण्डरीक

भाधरा कुमुदहासिनी च, कलहंसस्वना समुन्नतपयोधरा च, कमलकोमलकरा हिमगिरिशिलापृथुनितम्बा च, करभोरुर्विलम्बिगमना

जयश्रीः

धारिणी । तथा कुमुदं रात्रिविकासि कमलं हासयतीति तादृशी कुमुदविकासिनीति यावत् । या बालातपप्रभाधरा सा कथं रात्रिविकासिकमलविकासिनीति विरोधः । परिहारे तु-बालातपस्य नवीनातपस्य या प्रभा कान्तिस्तद्वदधरोऽधरोष्ठो यस्याः सा तथोक्ता नवातपकान्तिसमाधरोष्ठा । कुमुदस्येव हासो यस्याः सा कुमुदहासिनी कुमुदस्मितेति यावत् । कलहंसानां मरालानां स्वनः कूजितं यस्यां सा तादृशी मरालकूजिता । समुन्नता लम्बमानाः पयोधरा मेघा यस्यां सा तादृशी लम्बमानमेघा । कलहंसानां कूजितानि शरदि दृश्यन्ते, मेघाश्च प्रावृषीति द्वयमेकत्र कथमिति विरोधः । तत्परिहारे-कलहंसवत् स्वनो वचनं यस्याः सा कलहंसकूजितवचनेति यावत् । समुन्नतावुच्चौ पयोधरौ स्तनौ यस्याः सा तथोक्तोच्चकुचेति । यावत् । कमलैः पद्मैः कोमलाः सुकुमाराः करा रश्मयो यस्याः सा पद्मसुकुमारकान्तिरिति यावत् । हिमगिरेस्तुषारपर्वतस्य शिलाभिर्हिममयीभिः पृथुर्महान् नितम्बो मध्यभागो यस्याः सा । तुषाराचलपाषाणविशालमध्यदेशेति यावत् । यत्र हिमानी वर्त्तते तत्र कथं कमलकोमलकान्तयो भवन्तीति विरोधः । कमलानि हिमैर्नश्यन्तीति नियमात् । विरोधपरिहारे तु-कमलवत्कोमलौ करौ यस्याः सा पद्मसुकुमारहस्तेति यावत् । हिमगिरिर्हिमालयस्तस्य शिलावत्पृथुर्विशालो नितम्बो नितम्बभागो यस्याः सा । हिमालयदृषद्विशालकटिपश्चाद्भागेति यावत् । करभवदुष्ट्रवदूरू यस्याः सा करभोरुरुष्ट्रोरुः । विलम्बितं नातिशीघ्रं गमनं यस्याः सा

कथाभट्टीया

( कमल ) के समान मुखवाली और मृगनयनी यह अर्थ है । नवीन सूर्य के आतप को धारण करने वाली तथा कुमुद ( रात्रिविकासी कमल ) को विकसित करने वाली यह विरुद्ध अर्थ है । परिहार पक्ष में नवीन आतप के समान रक्त अधरोष्ठ से युक्त तथा कुमुद के समान श्वेत हास से युक्त यह अर्थ है । कलहंसों के नाद से शोभित और उन्नत मेघों से युक्त । परिहार पक्ष में हंस के समान स्वरवाली एवं उन्नत स्तनों से शोभित यह अर्थ है । कमलों से शोभित तथा हिमालय की शिलाओं से युक्त । परिहार पक्षमें-कमल के समान हाथों से युक्त व

च, अमुक्तकुमारभावा स्निग्धतारका च, इति । सा त्ववादीत्— 'आर्य, श्रोष्यसि कालेन । भूयसो दिवसानत्र स्थातुमभिलषति नौ हृदयम् । अल्पीयांश्चायमध्वा । परिचय एव प्रकटीकरिष्यति । आर्येण न विस्मरणीयोऽयमनुषङ्गदृष्टो जनः' इत्यभिधाय तूष्णीमभूत् ।

जयश्रीः

विलम्बितगमना नातिशीघ्रगतिरिति यावत् । या करभोरुः सा कथं विलम्बितगमनेति विरोधः । परिहारस्तु—करभस्येवोरुर्यस्याः सा करभोरुर्मांसलोरुः । विलम्बितं मन्दं गमनं यानं यस्याः सा तथोक्ता । मन्दगामिनीति यावत् । न मुक्तस्त्यक्तः कुमारे स्वामिकार्तिकेये भावो भक्तिर्यया सा तथोक्ता । अत्यक्तकार्तिकेयभक्तिरिति यावत् । तथा स्निग्धः प्रियस्तारकस्तारकासुराख्यो दैत्यो यस्याः सा । प्रियतारकासुरेति यावत् । या तारकासुरप्रणयिणी सा कथं कार्तिकेयभक्तिमतीति विरोधः । द्वयोर्विरुद्धत्वान्मिथः । विरोधपरिहारे तु—न मुक्तो न त्यक्तः कुमारभावो बाल्यं यया सा तथोक्ता । अत्यक्तबाल्येति यावत् । स्निग्धे रम्ये तारके कनीनिके यस्याः सा तथोक्ता । मनोरमकनीनिकेति यावत् । इति ।

सेति—सा सावित्री त्ववादीदुवाच । हे आर्य सुजन ! कालेनानेहसा श्रोष्यसि समाकर्णयिष्यसि । किञ्चित्कालानन्तरं स्वयमेव ज्ञास्यसीति भावः । नावावयोर्हृदयं मानसं भूयसो बहून् दिवसान् दिनानि । अत्र स्थातुं शोणनदे निवसितुमभिलषति समीहते । अयं क्रोशद्वयमितः । अध्वा मार्गः । अल्पीयानेव स्वल्प एव । परिचयः संस्तव एव प्रकटीकरिष्यति प्रकाशयिष्यति । आर्येण भवता । अनुषङ्गेण प्रसक्त्यानुप्रसक्त्या दृष्टो विलोकितोऽयं जनो न विस्मरणीयो नोपेक्षणीयः । इत्यभिधाय वदित्वा तूष्णीं जोषमभूद्बभूव । मौनमापदिति भावः ।

कथाभट्टीया

हिमालय की शिलाओं के समान विशाल नितम्बवाली । करभ ( उष्ट्र ) के समान ऊरुवाली तथा मन्दगामिनी । परिहारपक्ष में अर्थ—स्थूल ऊरु से युक्त और मन्दगामिनी । स्वामी कार्तिकेय की सेविका और तारकासुर से प्रेम करने वाली । परिहार का अर्थ—बाल्यावस्था से युक्त तथा सुन्दर नेत्रवाली । सावित्री ने उत्तर दिया कि "आप समय पाकर सब हमारा परिचय सुनेंगे । हम बहुत दिनों तक यहाँ निवास करेंगी । आपके निवासस्थान का मार्ग कोई अधिक दूर नहीं है । कुछ

दधीचस्तु नवाम्भोभरगभीराम्भोधरध्वाननिभया भारत्या नर्तयन्वनलताभवनभाजो भुजगभुजः सुधीरमुवाच—'आर्य, करिष्यति प्रसादमार्याराध्यमाना। पश्यामस्तावत्तातम्। उत्तिष्ठ। व्रजामः' इति। तथेति च तेनाभ्यनुज्ञातः शनकैरुत्थाय कृतनमस्कृतिरुच्चचाल। तुरगारूढं च तं प्रयान्तं सरस्वती सुचिरमुत्तम्भितपक्ष्मणा निश्चलतारकेण लिखितेनेव चक्षुषा व्यलोकयत्। उत्तीर्य शो-

जयश्रीः

सावित्री हि तत्परिचयं पृष्ट्वाधिगम्य च स्वपरिचयं तदुत्कण्ठावर्धनाय न जगादेति तात्पर्यम्। दधीचस्तु स युवा तु। नवानां नूतनानामम्भसां जलानां भरेण गौरवेण गभीरोऽम्भोधरो मेघस्तस्य ध्वानेन शब्देन निभा समाना तया तथोक्तया। नूतनजलधारणगम्भीरमेघशब्दसदृशयेति यावत्। भारत्या वाचा। वनलतानां काननवल्लीनां भवनानि गेहानि भजन्तीति तथोक्तान्। काननलतामण्डपसेविनः इति यावत्। भुजगभुजो मयूरान् नर्तयन् नाटयन्। सुधीरं सधैर्यमुवाच जगाद। आर्य! सुजन! आराध्यमाना सेव्यमाना। इयमार्या श्रेष्ठा सावित्री। प्रसादं प्रसन्नताम्। "प्रसादस्तु प्रसन्नता" इत्यमरः। करिष्यति विधास्यति। तातं पितरं पश्यामो विलोकयामस्तावदादौ। उत्तिष्ठ। व्रजामो गच्छामः इति दधीच उवाच। तथा भवत्विति तेन विकुक्षिणा। अभ्यनुज्ञातोऽनुमोदितः। शनकैः शनैरुत्थाय कृता विहिता नमस्कृतिः प्रणामो येन स तथोक्तो विहितप्रणाम इति यावत्। उच्चचाल प्रतस्थे। तुरगारूढमश्वापरिस्थितं प्रयान्तं गच्छन्तं तं दधीचं सरस्वती देवी। उत्तम्भितान्युत्क्षिप्तानि पक्ष्माणि यस्मिंस्तत् तेन तथोक्तेन। स्तब्धनेत्रतारकेणेति यावत्। लिखितेनेव लिपीकृतेनेव। चक्षुषा नयनेन व्यलोक-

कथाभट्टीया

दिन बाद परिचय होने पर सब विदित हो जावेगा। आप हमे नहीं भूलें, यह कहकर चुप हो गई। दधीच नवीन मेघ की ध्वनि के समान गम्भीर वाणी से लताओंमें विराजमान मयूरोंको उत्कण्ठित करता हुआ बोला। हे आर्य! यह सावित्री आराधना से अनुग्रह करेंगी। पहिले पिता के दर्शन करना चाहिए। उठिए! चलें। वह वृद्ध भी इस बात को मानकर नमस्कार कर के उठकर चल दिया। घोड़े पर जाते हुवे उस दधीच को सरस्वती ने बहुत देर तक टकटकी लगाकर

श्चमचिरेणव कालेन दधीचः पितुराश्रमपदं जगाम। गते च तस्मि-न्सा तामेव दिशमालोकयन्ती सुचिरमतिष्ठत्। कृच्छ्रादिव च सञ्जहार दृशम्।

अथ मुहूर्तमिव स्थित्वा स्मृत्वा च तां तस्य रूपसम्पदं पुनः पुनर्व्यस्मयतास्या हृदयम। भूयोऽपि चक्षुराचकाङ्क्ष तद्दर्शनम्। अवशेव केनाप्यनीयत तामेव दिशं दृष्टिः। अप्रहितमपि मनस्तेनव सार्धमगात्। अजायत च नवपल्लव इव बालवनलतायाः कुतोऽप्यस्या

जयश्रीः

यत् ददर्श। दधीचो युवा शोणं नदमुत्तीर्य तीर्त्वा। अचिरेणैव शीघ्रमेव कालेन समयेन पितुश्च्यवनस्याश्रमपदं टीभूमिं जगामायात। तस्मिन् दधीचे गते याते सति सा सरस्वती तामेव च्यवनाश्रमगामिनीमेव। दिशमाशामालोकयन्ती पश्यन्ती। सुचिरं बहुकालमतिष्ठदस्थात्। तथा कृच्छ्रादिव दुःखादिव। दृशं नयनं संजहार संचुकोच।

अथेति—अथानन्तरम्। मुहूर्तमिव घटिकाद्वयमिव स्थित्वा तस्य दधीचस्य तामलौकिकां रूपसम्पदं सौन्दर्यशोभां पुनः पुनर्वारं वारम्। स्मृत्वा ध्यात्वा। अस्याः सरस्वत्या हृदयं मानसं व्यस्मयत साश्चर्यमभूत। भूयोऽपि पुनरपि चक्षुर्नेत्रम्। तस्य दधीचस्य दर्शनं विलोकनमाचकाङ्क्ष इयेष। अवशेव प्रमत्तेव। दृष्टिर्दर्शनम्। तामेव च्यवनाश्रमीयामेव दिशमाशां केनापि पुरुषेणानीयत प्राप्यते स्म। अप्रहितमपि न प्रेषितमपि। मनश्चित्तम्। तेनैव यूना दधीचेन सार्धं सह। अगात जगाम। बाला नवीना चासौ वनस्य काननस्य लता वल्ली तस्या नवीनकाननवल्लया नवकिसलय इव नूतनपल्लव इव कुतोऽज्ञाता-

कथाभट्टीया

चित्रलिखित की तरह निश्चल नेत्र से देखा। शोणनद को पार करके दधीच शीघ्र ही पिता के गृह में पहुंच गया। उसके चले जाने पर भी सरस्वती उसी दिशा में देखती रही। बड़े कष्ट से अपनी दृष्टि को निवृत्त की। इसके अनन्तर कुछ देर तक उस दधीच की रूप सम्पत्ति के स्मरण से इसका हृदय विस्मित हुआ। पुनरपि उसको देखने की इच्छा की। पराधीन के समान मानो कोई सरस्वती की दृष्टि को उसी दिशा में ले जा रहा है। अप्रेषित भी मन उसी के साथ चला

अनुरागश्चेतसि । सालस्येव शून्येव सनिद्रेव दिवससमयत् । अस्त-मुपयाति च प्रत्यक्पर्यस्तमण्डले लाङ्गलिकास्तबकताम्रत्विषि कमलि-

जयश्रीः

दपि जनात् । अस्याः सरस्वत्याश्चेतसि मनसि । अनुरागोऽभिलाषः । अजायत सम्पद्यते स्म । बालवनलतापक्षे तु—कुतः पृथवीतो नवपल्लवोऽजायतेति ज्ञेयम् । अत्र सरस्वत्या दधीचदर्शनाभिलाषां वदता कविना विप्रलम्भोपभेदपूर्वरागश्रृङ्गारस्य दशसु मदनावस्थासु प्रथमावस्थाभिलाषाख्या वर्णिता । तथा चैता दशावस्थाः साहित्यदर्पणेऽभिहिताः—

"अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च ।
उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः ॥"

ननु देव्याः सरस्वत्या अनुरागो मानवे दधीचे कथमत्र वर्णित इति न वाच्यम् । भरतनाट्यशास्त्रे तथा प्रतिपादनात्—

"शापभ्रंशात्तु दिव्यानां तथा चापत्यलिप्सया ।
कार्यो मानुषसंयोगः श्रृङ्गाररससंश्रयः" इति ॥

आलस्येन सहिता सालस्या सालसेव शून्येव शून्योभूतेव स्तब्धेवेति यावत् । सनिद्रेव निद्रितेव । सा सरस्वती दिवसमहोऽनयत् यापयति स्म । इयं चिन्तनरूपा द्वितीया कामावस्था वर्णिता । सावित्रे सौरे तेजसि प्रकाशेऽस्तमस्ताचल-मुपयाति गच्छति सति सरस्वती पल्लवशयने तस्थाविति सम्बन्धः । तथा हि-प्रत्यक् पश्चिमायां दिशि पर्यस्तं स्रस्तं मण्डलं बिम्बं यस्य स तस्मिन् । तथोक्ते पश्चिमदिग्गतबिम्बे इति यावत् । लाङ्गलं पुष्पविशेषोऽस्त्यस्या इति लाङ्ग-लिका यद्वा लाङ्गलवत् खनति भूमिमिति "तेन दीव्यति" एतेन ठक् । अग्नि-शिखा । "स्याल्लङ्गलिक्यग्निशिखा" इत्यमरः । "अग्निज्वाला लाङ्गलिकी" इति वाचस्पतिः । तस्याः स्तबकवद् गुच्छवत् ताम्रा रक्तवर्णा त्विट् कान्तिर्यस्य तत्तस्मिन् तथोक्ते । अग्निशिखागुच्छकरक्तकान्ताविति यावत् । लाङ्गलिका रक्त-वर्णा भवति । कमलिन्याः पद्मिन्याः कामुकेऽभिलाषुके पद्मिनीविकासके इति भावः।

कथाभट्टीया

गया । किसी कारण से इसके चित्त में नवीन लता के पल्लव के समान अनुराग उत्पन्न हुआ । आलस्ययुक्त, स्तब्ध तथा निद्रित की तरह उसने दिन व्यतीत

नीकामुके कठोरसारसशिरःशोणशोचिषि सावित्रे त्रयीमये तेजसि, तरुणतरतमालश्यामले च मलिनयति व्योम व्योमव्यापिनि तिमिरसञ्चये, सञ्चरत्सिद्धसुन्दरीनूपुररवानुसारिणि च मन्दं मन्दं मन्दाकि-

जयश्रीः

सति सौरतेजसि कमलिनी विकसति । कठोरो जरठो यो सारसः पुष्कराख्यः पक्षी । "पुष्कराह्वस्तु सारसः" इत्यमरः । तस्य शिरोवन्मस्तकवच्छोणं रक्तं शोची रोचिर्यस्य तत् तस्मिन् । तथोक्ते । "रोचिः शोचिरुभे क्लीबे" इत्यमरः । स्थविरपुष्कराख्यपक्षिमस्तकताम्ररोचिषि इति यावत् । अत्र राजलक्ष्मीकारेण शोचिःपदस्य स्त्रीत्वमभिप्रेत्य "कठोरश्चासौ सारसश्च–कठोरसारसस्तस्य शिर इव शोणा शोचिरस्य तत्तस्मिन्" इत्युक्तम् । तन्न रुचिरम् । शोचिःशब्दस्यामरकोशकारेण "रोचिः शोचिरुभे क्लीबे" इत्यनेन क्लीबत्वप्रतिपादनात् । शुच्यति पूतीभवत्यनेनेति शोचिः । अत्र "ईशुचिर् पूतीभावे" ( दि० उ० से० ) इत्यस्माद् धातोः "अर्चिशुचि" ( उणा० ०।१०८ ) इत्यनेन इसिः प्रत्ययः । सवितुरिदं सावित्रं तस्मिन् सावित्रे सौरे त्रयीमये वेदत्रयीस्वरूपे । स्वरूपार्थे मयट् । "ऋग्यजुःसामनामानि त्रयो वेदास्त्रयी स्मृता । वेदे च पठ्यते सैषा" इति सङ्केते शङ्करः । तेजसि प्रकाशे । सूर्ये इत्यर्थः । तरुणतरो नवीनो यस्तमालस्तापिच्छस्तद्वत् श्यामलस्तस्मिन् तथोक्ते नवीनतापिच्छकालवर्णे इति यावत् । "कालस्कन्धस्तमालः स्यात्तापिच्छोऽपि" इत्यमरः । व्योमाकाशं व्याप्नोतीति तादृशे वियदभिभावके । तिमिरसञ्चये तमोराशौ । व्योमाकाशं मलिनयति सति श्यामलयति सति । सञ्चरन्त्यो भ्रमन्त्यो याः सिद्धसुन्दर्यो देवयोनिविशेषकामिन्यस्तासां नूपुररवान् पादवलयशब्दान् अनुसरतीति तादृशे दिव्यस्त्रीपादवलयशब्दानुगामिनि ।

कथाभट्टीया

किया । लाङ्गलिका ( अग्निशिखा ) के स्तबक के समान रक्तकान्तिवाले, कमलिनियों के पति, वृद्धसारस के मस्तक के समान रक्तकान्ति से विभूषित, वेदस्वरूप सूर्य के अस्ताचल पर चले जाने पर, नीवन तमाल के वृक्ष के समान श्यामवर्ण तथा आकाश को व्याप्त करने वाले अन्धकार के समूह से आकाश के मलिन होने पर, भ्रमण करने वाली सिद्ध सुन्दरियों के नूपुर शब्द से अनुगत मन्दाकिनी के हंस के समान स्थित चन्द्रमा के आकाश में उदित होने पर, सायंसन्ध्या में

नीहंस इव समुत्सर्पति शशिनि गगनतलम्, कृतसंध्याप्रणामा निशामुख एव निपत्य विमुक्ताङ्गी पल्लवशयने तस्थौ। सावित्र्यपि कृत्वा यथाक्रियमाणं सायन्तनं क्रियाकलापमुचिते शयनकाले किसलयशयनमभजत। जातनिद्रा च सुष्वाप।

इतरा तु मुहुर्मुहुरङ्गवलनैर्विलुलितकिसलयशयनतला निमीलितलोचनापि नाभजत निद्राम्। अचिन्तयच्च-'मर्त्यलोकः खलु सर्वलोका-

जयश्रीः

मन्दाकिनीहंस इव वियद्गङ्गाहंस इव। अत्रोत्प्रेक्षा। शशिनि चन्द्रे गगनतलमाकाशं मन्दं मन्दं समुपसर्पति सति समागच्छति सति। कृतो विहितः सन्ध्यायां सायङ्काले प्रणामो नतिर्यया सा तथोक्ता विहितसायंतननमस्कारेति यावत्। निशामुख एव प्रदोष एव। पल्लवशयने किसलयशयनीये। निपत्य पतित्वा। विमुक्तान्यङ्गानि यस्याः सा विमुक्ताङ्गी निहितकलेवरा। अनेनास्याः निःसहाङ्गत्वमुच्यते। तस्थौ समुपाविशत्। न पुनर्निद्रामलभत। अत्र "कृत" इत्यादिना "तस्थौ" इत्यन्तेन क्रियान्तरत्यागेन वैमनस्यमावेद्यते। स्मृतिरपि कामदशात्र सूचिता। सावित्र्यपि द्वितीया कन्यापि यथा क्रियत इति यथा क्रियमाणं सविधानम्। क्रियाणां कलापं क्रियाकलापमनुष्ठापनद्धतिं कृत्वा विधाय। उचिते न तु सरस्वतीवत्प्रदोषकाल एव। शयनकाले निद्रासमये। किसलयशयनं पल्लवतल्पमभजत सिषेवे। जातोत्पन्ना निद्रा यस्याः सा प्राप्तनिद्रा च सुष्वाप निद्रां भेजे।

इतरेति—इतरा तु सरस्वती ते। मुहुर्मुहुर्वारं वारम्। अङ्गानां वलनैरङ्गवलनैर्देहचालनैः। विलुलितं विपर्यासितं किसलयानां पल्लवानां शयनतलं शयनीयतलं यया सा तथोक्ता। विपर्यासितपल्लवशयनीयप्रदेशेति यावत्। निमीलिते मुद्रिते लोचने नयने यया सा तथोक्ता। निद्रितनयनापीति यावत्। निद्रां नाभजत न शिश्रय इति भावः। अचिन्तयच्च मनसि व्यचारयच्च। मर्त्यलोको मानु-

कथाभट्टीया

प्रणाम करके प्रदोष काल में ही पल्लवों की शय्या में लेटी रही। सावित्री ने भी सायंकालीन कार्य करके पल्लवों पर शयन किया और निद्रित हुई। पार्श्वपरिवर्तन से पल्लवों को मलिन करने वाली सरस्वती को नेत्रनिमीलन करने पर भी निद्रा नहीं आई। उसने विचार किया कि—मनुष्यलोक सब लोकों से अधिक है कि

नामुपरि, यस्मिन्नेवंविधानि संभवन्ति त्रिभुवनभूषणानि सकलगुणग्रामगुरूणि रत्नानि । तथा हि । तस्य मुखलावण्यप्रवाहस्य निष्यन्दबिन्दुरिन्दुः । तस्य च चक्षुषो विक्षेपा विकचकुमुदकुवलयकमलाकराः । तस्य चाधरमणेर्दीधितयो विकसितबन्धूकवनराजयः । तस्य चाङ्गस्य परभागोपकरणमनङ्गः । पुण्यभाञ्जि तानि चक्षूंषि चेतांसि यौवनानि वा

जयश्रीः

पलोकः खलु नूनम् । सर्वलोकानां सर्वजगतामुपरि वर्तते । यतो हि यस्मिन्मर्त्यलोके । त्रिभुवनस्य भूषणानि लोकत्रयालङ्कारभूतानि । एवंविधानि दधीचसदृशानि । सकलाः सर्वे ये गुणग्रामा दयादिगुणनिवहाः सूत्रनिवहाश्च तैर्गुरूणि महान्ति । तथोक्तानि समग्रगुणनिवहमहान्ति । रत्नानि सर्वश्रेष्ठानि सम्भवन्ति जायन्ते । तथा हीत्यनेन तद्गुणकीर्तनं कुरुते । अत्र गुणकीर्तनेन चतुर्थी कामावस्था गुणकथनरूपा वर्णिता । इन्दुश्चन्द्रस्तावत् । तस्य दधीचस्य मुखस्य वदनस्य लावण्यं तस्य प्रवाहः स्रोतस्तस्य तथोक्तस्य निष्यन्दबिन्दुः स्रावकणः । विकचानि विकसितानि कुमुदानि कैरवाणि कुवलयानि नीलोत्पलानि कमलानि पद्मानि च तेषामाकरा निचया इति विकचकुमुदकुवलयकमलाकरा विकसितकैरवनीलोत्पलपद्मनिचयाः । तस्य दधीचस्य चक्षुषो नयनस्य विक्षेपा उच्छिष्टांशप्रक्षेपाः । विकसितानां विकचानां बन्धूकानां बन्धूककुसुमानां वनानि काननानि तेषां राजयः श्रेणयः । तथोक्ताः । विकचबन्धुजीवकाननावलयः इति यावत् । तस्य दधीचस्य चाधरमणेरधरोष्ठरत्नस्य दीधितयः कान्तयः । बन्धूककुसुमसदृशोऽधरोष्ठ इति भावः । तस्य दधीचस्य । अङ्गस्य देहस्य । अनङ्गः कामः । परभागो वर्णस्य वर्णान्तरेण शोभातिशयस्तस्योपकरणं साधनसामग्री । प्रकर्षाधायकसाधनमित्यर्थः । स्त्रैणानि स्त्रीसम्बन्धीनि । चक्षूंषि नयनानि । चेतांसि मानसानि यौवनानि तारुण्यानि च

कथामञ्जरी

जिसमें ऐसे सुन्दर तीनों लोकों के आभूषणभूत तथा संपूर्ण गुणों से युक्त रत्न उत्पन्न होते हैं । तथाहि—चन्द्रमा उसके मुखलावण्यरूपी नदी का एक बिन्दु है । विकसित कुमुद, कुवलय व कमल इसके नेत्रों की उच्छिष्ट है । विकसित बन्धूक पुष्प की श्रेणि उसके अधरोष्ठ की कान्ति है । कामदेव उसके अङ्ग की शोभा बढ़ाने का साधन है । उनही स्त्रियों के चक्षु, चित्त व यौवन पुण्यवान् है

**त्रैणानि, येषामसौ विषयो दर्शनस्य । क्षणं नु दर्शयता च तमन्य- जन्मजनितेनेव मे फलितमधर्मेण का प्रतिपत्तिरिदानीम्' इति चिन्त- यन्त्येव कथङ्कथमप्युपजातनिद्रा चिरात्क्षणमशेत । सुप्ता च तं दी- र्घलोचनं ददर्श । स्वप्नासादितद्वितीयदर्शना चाकर्णाकृष्टकार्मुकेण**

जयश्रीः

तानि पुण्यभाञ्जि पुण्यवन्ति । येषां चक्षुरादीनाम् । असौ दधीचो दर्शनस्य विलो- कनस्य विषयो गोचरो भवति । क्षणं क्षणमात्रं तं दधीचं दर्शयता दर्शनं कारयता अन्यजन्मनि जन्मान्तरे जनितं समुत्पादितं तेनेव तथोक्तेन । जन्मान्तरसमुपार्जि- तेनेति यावत् । मे मम । अधर्मेण दुष्कृतेन । फलितं परिणतम् । प्रादुर्भूतमि- त्यर्थः । नु वितर्के । इदानीमधुना । का प्रतिप्रत्तिः किमनुष्ठेयमित्यर्थः । इतीत्थं चिन्तयन्त्येव । विचारयन्त्येव । कथं कथमपि केनापि प्रकारेण । उपजातनिद्रा प्राप्तनिद्रा चिराद्बहोः कालात् क्षणमल्पकालमशेत सुप्ता । सुप्ता निद्रिता सती दीर्घे आयते लोचने नयने यस्य तं तथोक्तम् । आयतनयनं तं दधीचं ददर्शापश्यत् । अनेन विरहिणां स्वप्नदर्शनं नाम विनोदस्थानमुक्तम् । सादृश्यप्रतिकृति स्वप्न- दर्शनतदङ्गस्पृष्टस्पर्शाख्यानि चत्वारि विरहिणां विनोदस्थानानि । यथोक्तं गुण- पताकायाम्—

"वियोगावस्थासु प्रियजनसदृक्षानुभवनं
ततश्चित्रं कर्म स्वपनसमये दर्शनमपि ।
तदङ्गस्पृष्टानामुपनतवतां दर्शनमपि ।
प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदितः" ॥ इति ।

स्वप्ने आसादितं प्राप्तं द्वितीयं दर्शनं विलोकनं यया सा तथोक्ता । निद्रा- समयप्राप्तपुनर्विलोकनेति यावत् । सा सरस्वती । आकर्णं श्रोत्रपर्यन्तमाकृष्टं गृहीतं

कथाभट्टीया

कि जिनको इसका सुख प्राप्त होता है । मेरे पूर्वजन्म के दुष्कृत का फल है कि जिसने मुझको क्षण मात्र ही दर्शन कराये । अब मुझे क्या करना चाहिये । इस तरह विचार करती हुई सरस्वती को किसी तरह कुछ निद्रा प्राप्त हुई । निद्रा में भी उसी दधीच को देखा । स्वप्न में उसके पुनर्दर्शन को प्राप्त करके वह काम-

मनसि । निर्दयमताड्यत मकरकेतुना । प्रतिबुद्धाया मदनशरताडितायाश्च तस्या वार्तामिवोपलब्धुमरतिराजगाम । तथा हि ततः प्रभृति कुसुमधूलिधवलाभिर्वनलताभिरताडितापि वेदनामधत्त । मन्दमन्दमारुतविधुतैः कुसुमरजोभिरदूषितलोचनाप्यश्रुजलं मुमोच । हंसपक्षतालवृन्तव्रातवितितैः शोणशीकरैरसिक्ताप्यार्द्रतामगात् । प्रेङ्खत्का-

जयश्रीः

कार्मुकं कोदण्डं येन स तेन तथोक्तेन । श्रोत्रान्तानीतधनुषेति यावत् । मकरकेतुना मीनध्वजेन कामेन । मनसि हृदये निर्दयं निष्करुणमताडयत प्राहन्यत । प्रतिबुद्धाया जागरितायाः । मदनशरताडितायाश्च कामबाणघातितायाश्च तस्याः सरस्वत्याः । वार्तामुदन्तम् । उपलब्धुमिवाधिगन्तुमिव । अरतिर्वस्तुवैराग्यम् । आजगाम समाययौ । इयमुद्वेगाख्या पञ्चमी कामावस्था वर्णिता । तथा हि । ततः प्रभृति तदवधि । कुसुमानां पुष्पाणां धूलिभिः परागैर्धवलाभिः सितवर्णाभिः । पुष्परागश्वेतवर्णाभिरिति यावत् । वनलताभिः काननवल्लीभिरताडितापि–अनाहतापि वेदनां व्यथामधत्त दधौ । सरजोवनलतादर्शनेन-कामोद्दीपनं जायत इति सा ता दृष्ट्वा खिन्नाभूदिति भावः । अताडितापि व्यथामापेति विरोधः । तन्निरासस्तु कामातुरतया विज्ञेयः । अत्र विरोधाभासोऽलङ्कारः । अतिशयेन मन्द इति मन्दमन्दः स चासौ मारुतश्चेति तेन विधुतानि तैर्मन्दमन्दपवनकम्पितैः कुसुमरजोभिः पुष्पपरागैः । अदूषितेऽविकृते लोचने नयने यस्याः सा तादृशी । अविकृतनयनापि। अश्रुजलं नेत्रजलं मुमोच तत्याज । सति नेत्रविकारे तज्जलं पतति । अत्र तु तं विनापि तदुत्पत्तिरिति विरोधस्य कामातुरतया परिहारो विज्ञेयः । हंसपक्षा मरालपक्षतिततय एव तालवृन्तानि व्यजनानि तेषां व्राता निवहास्तैर्वितता विस्तीर्णास्तैस्तथोक्तैः । मरालपक्षतिव्यजननिवहविस्तीर्णैरिति यावत् । शोणस्य नदविशेषस्य शीकरा बिन्दवस्तैः । असिक्तापि-अनाविलापि । आर्द्रतां क्लिन्नतामगात्

कथाभट्टीया

पीड़ा से बहुत व्याकुल हुई । कामदेव के बाणों से ताडित उस सरस्वती की कुशलवार्ता के लिये ही जागृत अवस्था में वैराग्य का आगमन हुआ । तथाहि— पुष्परज से व्याप्त लताओं से अताडित भी उसने दुःख का अनुभव किया । मन्द २ पवन से कम्पित पुष्परज के विना ही नेत्रों से अश्रुप्रवाह किया । हंसपक्ष

दम्बमिथुनाभिरनूढाप्यघूर्णत वनकमलिनीकल्लोलदोलाभिः । विघटमानचक्रवाकयुगलविसृष्टैरस्पृष्टापि श्यामतामाससाद विरहनिःश्वासधूमैः । पुष्पधूलिधूसरैरदष्टापि व्यचेष्टत मधुकरकुलैः ।

अथ गणरात्रापगमे निवर्तमानस्तेनैव वर्त्मना तं देशमागत्य तथैव

जयश्रीः

प्रापत् । प्रेङ्खन्ति चलन्ति यानि कादम्बानां कलहंसानां मिथुनानि युगलानि यासु तास्ताभिस्तथोक्ताभिः । संचलत्कलहंसयुगलाभिः । वनेषु जलेषु यः कमलिन्यः पद्मिन्यः, ता एव कल्लोलदोला तरङ्गरूपा दोलनयन्त्राणि ताभिस्तथोक्ताभिः । जलपद्मिनीवीचिदोलनयन्त्रैरिति यावत् । अनूढाप्यनुदूढतापि । अघूर्णत कम्पते स्म । विघटमानानि वियुज्यमानानि यानि चक्रवाकयुगलानि चक्रवाकमिथुनानि तैर्विसृष्टास्तैस्तथोक्तैः । वियुज्यमानचक्रवाकमिथुनप्रहितैरिति यावत् । विरहेण वियोगेन ये निःश्वासा एव धूमास्तैस्तथोक्तैः वियोगाश्वासधूमैरिति यावत् । अस्पृष्टा—अकृतस्पर्शापि । श्यामतां मलिनतां कृष्णतामिति यावत् । यद्वा श्यामतां श्रृङ्गाररसाविष्कारिवैवर्ण्यमिति । तथोक्तम्—

"श्रृङ्गारदेवो भगवान्मुरारिः सङ्गीयते श्यामवपुर्मुरारिः ।
श्यामो मनाक्स्निग्धतरश्च तेन श्रृङ्गारशंसी मुखराग उक्तः" ॥ इति ॥

आससाद प्राप । पुष्पाणां कुसुमानां धूल्या रजसा । धूसरैर्मलिनैः प्रसूनपरागमलिनैरिति यावत् । मधुकरकुलैर्भ्रमरनिवहैः । अदष्टाप्यभक्षितापि । व्यचेष्टत विलुलोठ ।

अथेति—अथानन्तरम् । गणरात्रं निशा बह्व्यः । "गणरात्रं निशा बह्व्यः" इत्यमरः । तस्यापगमेऽपयाते सति । तेनैवोक्तपूर्वेणैव । वर्त्मना मार्गेण । निवर्त्तमानः प्रत्युद्गच्छन् तं देशं सरस्वतीप्रदेशमागत्यागम्य । तथैव पूर्वोक्तप्रकारेणैव ।

कथाभट्टीया

रूपी व्यजनों द्वारा उड़ाये गये शोणनद के बिन्दुओं से सेक के विना ही आर्द्रता को प्राप्त हुई । कलहंसों से युक्त जल में कमलिनीरूपी दोला में विना बैठे ही कम्पित होने लगी । वियोगी चक्रवाक मिथुनों के श्वास से स्पर्श के विना ही श्यामता को प्राप्त की । पुष्प धूलि से व्याप्त भ्रमरों के दंश के विना ही व्याकुल होने लगी । इसके अनन्तर बहुत दिनों के व्यतीत हो जाने पर उसी रास्ते से वापिस आता

निवारितपरिजनश्छत्रधारद्वितीयो विकुक्षिर्डुढौके । सरस्वती तु तं दूरादेव सम्मुखमागच्छन्तं प्रीत्या सम्यक्समुत्थाय वरमृगीवोद्ग्रीवा विलोकयन्ती मार्गपरिश्रान्तमस्नपयदिव धवलितदशदिशा दृशा, कृतासनपरिग्रहं तु तं प्रीत्या सावित्री, पप्रच्छ—'आर्य, कच्चित्कुशली कुमारः' इति । सोऽब्रवीत्–"आयुष्मति, कुशली । स्मरति च भवत्योः ।

जयश्रीः

निवारितपरिजनोऽपसारितसेवकवर्गः । छत्रं धरतीति छत्रधारः स द्वितीयोऽपरो यस्य स छत्रधारद्वितीय आतपत्रवाहकसहितः । विकुक्षिर्दधीचपरिजनो डुढौके समाययौ । अत्र "डुढौके" इत्यनेन निमित्तपरतन्त्रतया सन्निकृष्टमेवैनामालुलोक-इति प्रदर्शिता दूतगुणाः । तथोक्तम्–"पटुता, धृष्टता, इङ्गिताकारज्ञानम्, प्रतारणे देशकालज्ञता, कार्येषु विपश्चबुद्धित्वम्, लघ्वी प्रतिपत्तिः, सापाया चेति दूतीगुणाः" । भरतमुनिनापि—

"विज्ञानगुणसम्पन्ना कथिनी लिङ्गिनी तथा ।
रङ्गोपजीविनी चापि प्रतिपत्तिविचक्षणा ॥
प्रोत्साहनैककुशलेत्यादि दूती गुणैर्युता" ।

सरस्वती तु शारदा तु तं विकुक्षि दूरादेव सम्मुखमागच्छन्तमभिमुखमायान्तं प्रीत्या प्रेम्णा सम्यक् समुत्थानं विधाय । वरा चासौ मृगी च वरमृगी श्रेष्ठहरिणी सेवोद्ग्रीवोन्नतग्रीवा । विलोकयन्ती पश्यन्ती । धवलिताः सितीकृता दश दिशो यया सा तथोक्तया सितीकृतदशाशया दृशा नेत्रेण । मार्गेण गमनवर्त्मना परिश्रान्तं क्लान्तम् । अस्नपयदिव स्नपयामासेव । अत्रोत्प्रेक्षालङ्कारः । कृतो विहित आसनस्य परिग्रहः स्वीकृतिर्येन स तं तथोक्तम् । आसनासीनमिति यावत् । तं विकुक्षि सावित्री प्रीत्या प्रेम्णा पप्रच्छ जिज्ञासितवती । हे आर्य ! कुमारो दधीचः

कथाभट्टीया

हुआ विकुक्षि उसी स्थान पर आकर अपने सेवकवर्ग को हटाकर छत्रधारक पुरुष के साथ वहाँ आया । सरस्वती ने दूर से ही संमुख आते हुवे उसे देखकर उठकर ऊँची गर्दन से देखती हुई अपनी दृष्टि से मार्गश्रम से श्रान्त उसको मानो स्नान ही कराया हो । आसन पर बैठ जाने के बाद प्रेमपूर्वक सावित्री ने प्रश्न किया—कि हे आर्य ! कुमार दधीच कुशली तो हैं । उसने उत्तर दिया कि हे आयुष्मति !

केवलममीषु दिवसेषु तनीयसीमिव तनुं बिभर्ति । अविज्ञायमानां चानिमित्तां शून्यतामिवाधत्ते । अपि च । अन्वक्षमागमिष्यत्येव मालतीति नाम्ना वाणिनी वार्त्तां वो विज्ञातुम् । उच्छ्वसितं सा कुमारस्य' इति । तच्छ्रुत्वा पुनरपि सावित्री समभाषत-'अतिमहानुभावः खलु कुमारो यदेवमविज्ञायमाने क्षणदृष्टेऽपि जने परिचितिमनुबध्नाति । तस्य हि गच्छतो यदृच्छया कथमप्यंशुकमिव मार्गलतासु

जयश्रीः

कुशली क्षेमवानस्ति कच्चित् । "कच्चित्कामप्रवेदने" इत्यमरः । स विकुक्षिरब्रवीद उवाच । कुशली क्षेमवानिति । भवत्योर्युवयोः । स्मरति चिन्तयति । केवलममीषु एतेषु दिवसेषु दिनेषु । तनीयसीमिवातितरां क्षामां तनुं देहं बिभर्ति धारयति । अविज्ञायमानामप्रतीयमानां चानिमित्तां निष्कारणाम् । शून्यतां स्तब्धतामिवाधत्ते दधाति । अपि च । अक्ष्णामनु इति अन्वक्षं प्रत्यक्षम् । मालतीति नाम्ना मालतीनामिका । वाणिनी दूती । "वाणिन्यौ नर्तकीदूत्यौ" इत्यमरः । वो युष्माकं वार्ता कुशलोदन्तं विज्ञातुमधिगन्तुम् । आगमिष्यत्येवायास्यत्येव । सा मालती कुमारस्य दधीचस्य । उच्छ्वसितं प्राणा इति । तद्वृत्तान्तं श्रुत्वा निशम्य पुनरपि भूयोऽपि सावित्री समभाषत समवादीत । कुमारो दधीचः खलु । अतिमहानुभावो महाप्रभावः । यद् यतः । एवमनेन प्रकारेण । अविज्ञायमानेऽपरिचीयमाने। क्षणमल्पकालं यावत् दृष्टे विलोकितेऽपि जने परिचितिं परिचयमनुबध्नात्यनुसरति । गच्छतः पितृकुलं यास्यतस्तस्य कुमारस्य यदृच्छया कथञ्चित् । मार्गल-

कथाभट्टीया

वह कुशली है और तुम दोनों का स्मरण करता है। इन दिनों में शरीर कृश हो रहा है। विना कारण ही गुप्त स्तब्धता को धारण करता है। मालती नाम की दूती आपकी कुशलता के ज्ञान के लिये आवेगी। यह कुमार की विश्वस्तभूत है। यह सुन कर सावित्री ने फिर कहा कि वह कुमार महानुभाव है कि जिससे वह अपरिचित पुरुष के साथ क्षणमात्र के दर्शन से ही परिचय करता है। पिता के गृह को जाते समय कुमार का मन हमारे में मार्ग की लताओं में वस्त्र की तरह आसक्त हुआ था। तुम्हारे राजकुमार

मानसमस्मासु मुहूर्तमासक्तमासीत् । अशून्यं हि सौजन्यमाभिजात्येन वः स्वामिसूनोः । अलसः खलु लोको यदेवं सुलभसौहार्दानि येन केनचिन्न क्रीणाति महतां मनांसि । सोऽयमौदार्यातिशयः कोऽपि महात्मनामितरजनदुर्लभो येनोपकरणीकुर्वन्ति त्रिभुवनम्' इति । विकुक्षिरुच्चावचैरालापैः सुचिरमिव स्थित्वा यथाभिलषितं देशमयासीत् ।

जयश्रीः

तासु वर्त्मनि वल्लीषु अंशुकमिव वसनमिव । अस्मासु मानसं चित्तं मुहूर्तमल्पकालम् । कथमप्यासक्तं निरतमासीत् । वो युष्माकं स्वामिसूनोर्दधीचस्य । अभिजातस्य भाव आभिजात्यं तेन महाकुलीनत्वेन सौजन्यं सुजनता सौमनस्यं वा अशून्यं न विरहितम् । युष्माकं स्वामिसुते आभिजात्यं सौजन्यं चेति द्वयमपि वर्त्तत इति भावः । खलु नूनम् । लोको जनः । अलसोऽपटुः । यदेवमनेन दृश्यमानेन प्रकारेण सुलभं सहजं सौहार्दं येषां तानि । सहजस्नेहबन्धनानीति यावत् । महतामुत्तमानां मनांसि मानसानि येन केनचिदल्पेनापि मूल्येन सम्भाषणादिनेत्यर्थः । न क्रीणाति न स्वायत्तीकुरुते । साऽयं कोऽपि विशिष्टो महात्मनां महताम् । इतरजनेषु जनान्तरेषु दुर्लभो दुष्प्राप । उदारस्य भाव औदार्यं तस्यातिशयो महत्तातिरेकः । येनौदार्येण त्रिभुवनं लोकत्रयमुपकरणीकुर्वन्ति स्वायत्ततां नयन्ति । इति समभाषत सावित्री सेति सम्बन्धः । विकुक्षिरुच्चावचैः प्रस्तुतकार्यसम्पृक्तैरालापैः संलापैः सुचिरमिव बहुकालमिव । स्थित्वा यथाभिलषितं यथेष्टं देशं प्रदेशं दधीचनिकटमित्यर्थः । अयासीदगमत् ।

कथाभट्टीया

में कुलीनता और सज्जनता दोनों ही हैं । मनुष्य मूर्ख ही है कि जो इस प्रकार सुलभसौहार्द महापुरुषों के मन को संभाषण आदि से भी वशीभूत नहीं करता है । अन्य पुरुषों में दुष्प्राप्य महात्माओं की यह उदारता है कि जिससे वे त्रिभुवन को वशीभूत कर लेते हैं । इस प्रकार अनेक तरह वार्तालाप करके विकुक्षि अपने देश को चला गया ।

(१)अपरेद्युरुद्यति भगवति द्युमणावुद्दामद्युतावभिद्रुततारके तिरस्कृततमसि तामरसव्यासव्यसनिनि सहस्ररश्मौ शोणमुत्तीर्यायान्ती, तरलदेहप्रभावितानच्छलेनात्यच्छं सकलं शोणसलिलमिवानयन्ती, स्फुटितातिमुक्तककुसुमस्तबकसमत्विषि सटाले महति मृगपताविव गौरी तुरङ्गमे स्थिता, सलीलमुरोवध्रारोपितस्य तिर्यगुत्कर्णतुरगा-

जयश्रीः

अथ मालतीवर्णनमारभते "अपरेद्युः" इत्यादिना—

**अपरेद्युरिति।** अपरेद्युरित्यारभ्य मालती समदृश्यतेति क्रियाकारकसम्बन्धः। कीदृशी सा मालती। अपरेद्युरन्यस्मिन्दिने। उद्दाम्न्युत्कटा द्युतिः कान्तिर्यस्य स तस्मिन्। अभिद्रुता न्यक्कृतास्तारका नक्षत्राणि येन स तस्मिन्। तिरस्कृतमपसारितं तमोऽन्धकारो येन स तस्मिन्। तामरसं रक्तोत्पलं तस्य व्यासो विस्तारस्तत्र व्यसनमासक्तिरस्यास्तीति तादृशे। सहस्रं रश्मयो यस्य स तस्मिन् सहस्रकिरणे। दिवि मणिरिव द्युमणौ सूर्ये भगवति। उद्यति सति उदयं गच्छति सति। शोणं शोणाख्यं नदमुत्तीर्यायान्ती आगच्छन्ती सती तरला चञ्चला या देहस्य शरीरस्य प्रभा कान्तिस्तस्या वितानो विस्तारस्तस्य छलेन व्याजेन। अत्यच्छं स्वच्छं सकलं सम्पूर्णम्। शोणसलिलमिव शोणनदजलमिव। आनयन्ती समानयन्ती। स्फुटितानि विकचानि यान्यतिमुक्तककुसुमानि रथद्रुप्रसूनानि। "रथद्रुरतिमुक्तकः" इत्यमरः। तेषां स्तबकेन गुच्छेन समा सदृशा त्विट् कान्तिर्यस्य स तस्मिन्। सटास्ति यस्येति सटाले जटायुक्ते। महति विशाले। मृगपतौ सिंहे गौरीव पार्वतीव गौरी गौराङ्गी मालती तुरङ्गमे तुरगे स्थितोपविष्टा। सलीलं सहेलम्। उरोवध्रा—अश्वपृष्ठारूढस्य चरणस्थानार्थं शिक्यम्। तत्रारोपितस्य स्थापितस्य। तिर्यक् साचि, उद् ऊर्ध्वं कर्णौ यस्य तेन तुरगेणाकर्ण्यमानं श्रूयमाणं

कथाभट्टीया

एक दिन अतितेजस्विनी कान्ति से युक्त, तारकगण व अन्धकार को दूर करने वाले, कमलों को विकसित करने में तत्पर, अम्बरमणि सूर्य के उदय होने पर शोणनद को तैर कर आती हुई, चञ्चल देह की कान्तिपूर के व्याज से संपूर्ण स्वच्छ शोणनद के जल को मानों अपने साथ लाती हुई, विकसित अतिमुक्तक के

( १ ) एतदन्तर्गतः पाठः साहित्यमध्यमापरीक्षाबहिर्भूतः।

करार्पमाननूपुरपटुरणितस्यातिबहलेन पिण्डालक्तकेन पल्लवितस्य कुङ्कुमपिञ्जरितपृष्ठस्य चरणयुगलस्य प्रसरद्भिरतिलोहितैः प्रभाप्रवाहैरुभयतस्ताडनदोहदलोभागतानि किसलयितानि रक्ताशोकवनानीवाकर्षयन्ती, सकलजीवलोकहृदयहठहरणाघोषणयेव रशनया

जयश्रीः

नूपुराणां पादकटकानां पटु सुन्दरं रणितं नादो यस्य तस्य । अतिबहलेन भूयसा पिण्डालक्तकेन क्वथितलाक्षारसेन । पल्लवितस्य किसलयवदाचरतः । कुङ्कुमेन पिञ्जरितं रञ्जितं पीतवर्णीकृतं पृष्ठं यस्य तादृशस्य । चरणयुगलस्य पादयुग्मस्य । प्रसरद्भिर्विसरणशीलैः । अतिलोहितैः रक्तैः । प्रभाप्रवाहैः कान्तिनिर्झरैः । उभयतो द्वयोः पार्श्वयोः । ताडनस्य पादाघातस्य दोहदोऽभिलापस्तस्य लोभेन प्रेम्णेति यावत् । रमणीपादाघातेनाशोको विकसति । यथोक्तम्—

'स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति वकुलो सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम् ।
मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवातात्
चेतो गीतान्नमेरुर्विकसति च पुरो नर्तनात्कर्णिकारः'' ॥ इति ।

आगतानि समायातानि किसलयितानि पल्लवितानि । रक्ताशोकवनानि रक्ताशोकवृक्षनिवहान् । आकर्षयन्तीवानयन्तीव । सकलानां सर्वेषां जीवलोकानां प्राणिनां हृदयानि मनांसि तेषां हठेन सहसा हरणमपसारणं तस्य आसमन्तात् घोषणोच्चैराह्वानं तथाभूतयेव । वाद्यविशेषानुगताघोषणेत्यर्थः । रशनया मेख-

कथाभट्टीया

पुष्पसमूह के समान कान्तिवाले अश्व पर जटाओं से युक्त सिंहपर विराजमान पार्वती के समान उपविष्ट, सविलास उरोवध्रा ( पायदा ) में स्थापित, नूपुर के गम्भीर शब्द को अश्व के कर्णों को श्रवण कराने वाले, बहुत अधिक अलक्तक से पल्लवित, कुङ्कुम से उपरिभाग में पीतवर्ण ऐसे चरणयुगल के फैलने वाले प्रभाप्रवाह से दोनों पार्श्वभागों में पादताडन रूप दोहद के लोभ से आये हुवे पल्लवित रक्ताशोक वृक्षों के समूहों को ही मानों खैंचती हुई, सकल जीव लोक के हृदयों को हठात् हरण करने की घोषणा करनेवाली काञ्ची के शब्द से अलंकृत जघनस्थल को धारण

शिञ्जानजघनस्थला, धौतधवलनेत्रनिर्मितेन निर्मोकलघुतरेणाप्रपदीनेन कञ्चुकेन तिरोहिततनुलता, छातकञ्चुकान्तरदृश्यमानैराश्यानचन्दनधवलैरवयवैः स्वच्छसलिलाभ्यन्तरविभाव्यमानमृणालकाण्डेव सरसी, कुसुम्भरागपाटलं पुलकबन्धचित्रं चण्डातकमन्तःस्फुटं स्फटिकभूमिरिव रत्ननिधानमादधाना, हारेणामलकीफलनिस्तुलमुक्ताफ-

जयश्रीः

लया । शिञ्जानं स्वनत् जघनस्थलं जघनप्रदेशो यस्याः सा तया । धौतं क्षालितं यद् धवलं सितवर्णं नेत्रवसनं तेन निर्मितेन रचितेन निर्मोकवत् सर्पकञ्चुकवल्लघुतरेणातिलघुना । आप्रपदं प्राप्नोत्याप्रपदीनः पादं यावत् । तेन । यद्वा प्रपदं पादाग्रं प्रपदात् आ आप्रपदं तत् व्याप्नोतीति तादृशेन । कञ्चुकेन वस्त्रेण । तिरोहिताच्छादिता तनुलता शरीरवल्ली यया सा तादृशी । छातः सूक्ष्मः । "अमांसो दुर्बलश्छातः" इत्यमरः । छयति स्मेति "छो छेदने" ( दि० प० अ० ) "गत्यर्था०" ( ३।४।७२ ) इति क्तः । कञ्चुको वसनं तस्यान्तरेषु मध्यभागेषु दृश्यमानैर्विलोक्यमानैः । आश्यानानि ईषच्छुष्काणि यानि चन्दनानि तैर्धवलानि सितानि तैः । अवयवैरङ्गसंस्थानविशेषैः । स्वच्छं निर्मलं यत्सलिलं जलं तस्याभ्यन्तरे मध्यमभागे विभाव्यमानो ज्ञायमानो मृणालकाण्डो मृणाललता कमलतन्तुरिति भावः । यस्यां सा तादृशी । सरसी बाल्यसरोवर इवेत्युत्प्रेक्षायाम् । कुसुम्भरागेण महारजनवर्णेन । पाटलं रक्तम् । "कुसुम्भं हेमनि महारजने ना कमण्डलौ" इति मेदिनी । पुलकबन्धेन नानावर्णबिन्दुविन्यासेन चित्रं विचित्रम् । चण्डातकमर्धोरुकम् । "अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम्" इत्यमरः । स्फटिकभूमिः । अन्तःस्फुटं रत्ननिधानमिव मणिनिधिमिवादधाना धारयन्ती । रत्ननिधानमपि कुसुम्भरागेण पद्मरागेण पाटलं रक्तं पुलकबन्धेन मणिविशेषेण चित्रं चेति ज्ञेयम् । अत्रोपमालङ्कारः । आमलकीफलानीव धात्रीफलानीव निस्तुलानि तुलारहितानि निरुपमानीति भावः ।

कथाभट्टीया

करने वाली, श्वेत वस्त्र से निर्मित सर्प की कञ्चुकी के समान सूक्ष्म तथा चरणपर्यन्त लम्बमान कञ्चुक से शरीर को आच्छादित करने वाली, सूक्ष्म कञ्चुक के अन्दर से दिखने वाले तथा कुछ शुष्क चन्दन के समान धवल अपने शरीर के अवयवों से स्वच्छ जल के अन्दर से दृश्यमान मृणाललता से शोभित सरसी ( सरोवर )

लेन स्फुरितस्थूलग्रहगणशारा, शारदीव श्वेतविरलजलधरपटलावृता द्यौः, कुचपूर्णकलशयोरुपरि रत्नप्रालम्बमालिकामरुणहरितकिरणकिसलयिनीं कस्यापि पुण्यवतो हृद्प्रवेशवनमालिकामिव बद्धां धारयन्ती, प्रकोष्ठनिविष्टस्यैकस्य हाटककटकस्य मरकतमकरवेदिकासनाथस्य हरितीकृतदिगन्ताभिर्मयूखसन्ततिभिः स्थलकमलिनीभिरिव

जयश्रीः

मुक्ताफलानि मौक्तिकानि यस्मिन्स तेन हारेण मुक्तामालया । स्फुरिताः प्रदीप्ताः स्थूला ये ग्रहगणा नक्षत्राणि तैः शारा विचित्रा । श्वेताः सितवर्णा विरलाः प्रकीर्णा ये जलधरा मेघास्तेषां पटलानि निवहास्तैरावृता व्याप्ता शारदी शरत्कालीना द्यौरिवान्तरिक्षमिव स्थिता । कुचावेव स्तनावेव पूर्णकलशौ जलपूर्णघटौ तयोरुपरि रत्नप्रालम्बमालिकां रत्नहारमालाम् । "प्रालम्बमृजुलम्बि स्यात्कण्ठात्" इत्यमरः । अरुणा रक्ता हरिता हरिद्वर्णा ये किरणा रश्मयस्तैः किसलयिनीं सञ्जातपल्लवाम् । कस्यापि पुण्यवतः सुकृतवतो जनस्य बद्धां हृदयप्रवेशाय मानसप्रवेशाय वनमालामिव पत्रपुष्पयोजितां स्रजमिव । अत्रोत्प्रेक्षालङ्कारः । धारयन्ती बिभ्राणा । प्रकोष्ठे कूर्परस्याधोभागे निविष्टो धृतस्तस्य । मरकतमणेर्या मकराकारा मीनाकारा वेदिका रत्नप्रतिष्ठापीठिका तया सनाथस्य सहितस्य हाटककटकस्य सुवर्णवलयस्य हरितीकृता श्यामीकृता दिगन्ता याभिस्तास्ताभिः । मयूखसन्ततिभिः किरणनिवहैः । लक्ष्मीशङ्कया लक्ष्मीसन्देहेन स्थलकमलिनीभिरिव स्थलप-

कथाभट्टीया

के समान सुन्दर शोभमान, कुसुम्भ के रंग से लाल तथा अनेक वर्ण की बिन्दुओं से विभूषित चण्डातक को रत्ननिधि को स्फटिकभूमि के समान धारण करने वाली, आमलकीफल के समान निरुपम मोतियों के हार से चमकते हुए नक्षत्रों के समान शोभित, तथा छोटे २ श्वेत वर्ण के मेघों से व्याप्त शरत्काल के आकाश के समान स्थित, स्तनरूपी पूर्ण कलशों के ऊपर लाल व हरित किरणों से किसलय युक्त रत्नों की माला को किसी भाग्यवान् के हृदयप्रवेश के लिये बद्ध की गई वनमाला की तरह धारण करती हुई, मरकत मणियों की मत्स्याकार वेदियों से खचित तथा प्रकोष्ठ में धारित सुवर्णवलय की दिशाओं को हरित करने वाली कान्तियों से लक्ष्मी की भ्रान्ति से स्थल कमलिनियों से मानो अनुगत, अधिक

लक्ष्मीशङ्कयानुगम्यमाना, बहलताम्बूलकृष्णिकान्धकारितेनाधरसम्पुटेन मुखशशिपीतं ससन्ध्यारागं तिमिरमिव वमन्ती, विकचनयनकुवलयकुतूहलालीनयालिकुलसंहत्या नीलांशुकजालिकयेव निरुद्धार्धवदना, नीलीरागनिहितनीलिम्ना शितिगलशितिना वामश्रवणाश्रयिणा दन्तपत्रेण कालमेघपल्लवेनेव विद्युदिव द्योतमाना, बकुलफलानुकारिणीभिस्तिसृभिर्मुक्ताभिः कल्पितेन बालिकायुगलेनाधोमुखेनालोकजलवर्षिणा

जयश्रीः

श्विनीभिरिव । अनुगम्यमाना—अनुस्रियमाणा । बहलेन पुनःपुनश्चर्वितेन ताम्बूलेन नागवल्लीदलेन या कृष्णिका कृष्णवर्णलेखा तयान्धकारितेन सञ्जातान्धकारेण । अधरसम्पुटेन ओष्ठपुटेन । मुखमेव तमःपारप्रतिपिपादयिषया शशी चन्द्रस्तेन पीतं गृहीतं सन्ध्यारागेण सायङ्कालीनलौहित्येन सहितं ससन्ध्यारागं तिमिरमिवान्धकारमिव वमन्ती समुद्गिरन्ती। विकचे विकसिते नयने एव कुवलये कमले तयोः कुतूहलात् कौतुकात् आलीना संसक्ता तया भ्रमरमालया । नीलस्य नीलवर्णस्यांशुकस्य वसनस्य किरणस्य वा जालिका निवहस्तया । इवोत्प्रेक्षायाम् । निरुद्धमावृतमर्धं वदनं मुखं यस्याः सा । नीलीरागेण नीलरागेण निहितः स्थापितो नीलिमा नीलत्वं यस्मिंस्तेन । शितिगलो नीलकण्ठो महादेवस्तदिव शितिना नीलेन । वामं श्रवणं कर्णमाश्रयतीति तादृशा वामकर्णावलम्बिना । दन्तपत्रेण कुन्दपुष्पाकारकवर्णावतंसेन । विद्युत् तडित् । कालमेघस्य श्यामपयोधरस्य पल्लवेनेव पिण्डेनेव । द्योतमाना शोभमाना । बकुलफलमनुकुर्वन्तीति तादृशीभिर्बकुलफलसमानाभिः । तिसृभिर्मुक्ताभिर्मुक्ताफलैः कल्पितेन निर्मितेन बालिका कर्णोपवेधेऽलङ्कारस्तस्या युगलं युग्मं तेन । अधोमुखेन नम्रवदनेन । आलोको द्युतिरेव जलं तद्वर्षिणा कान्तिनीरवर्षिणा ।

कथाभट्टीया

ताम्बूल चर्वण से कृष्णता को प्राप्त हुए अधरोष्ठ द्वारा मुखचन्द्र से पीत तथा सन्ध्याराग से युक्त तिमिर को ही मानो निकालती हुई, विकसित नयन रूपी कमल के आनन्द से आने वाली भ्रमरपंक्ति से नीले वस्त्र से ही मानो अपने मुख को आच्छादित करने वाली, नीले रंग से नील वर्ण वाले तथा महादेव के कंठ के समान सुन्दर वामकर्ण मे स्थित कर्णाभरण से कालमेघ से शोभित विद्युत् के समान शोभमान, बकुल ( बौंसली ) फल के सदृश तीन मोतियों से निर्मित दो

सिञ्चन्तीवातिकोमले भुजलते, दक्षिणकर्णावतंसितया केतकीगर्भपलाशलेखया रजनिकरजिह्वालतयेव लावण्यलोभेन लिह्यमानकपोलतया, तमालश्यामलेन मृगमदामोदनिष्यन्दिना तिलकबिन्दुना मुद्रितमिव मनोभवसर्वस्वं वदनमुद्वहन्ती, ललाटलासकस्य सीमन्तचुम्बिनश्चटुलातिलकमणेरुदञ्चता चटुलेनांशुजालेन रक्तांशुकेनेव कृतशिरोवगुण्ठना, पृष्ठप्रेङ्खदनादरसंयमनशिथिलजूटिकाबन्धा नीलचामरावचूलिनीव

जयश्रीः

अतिकोमले सुकुमारे भुजलते हस्तलते सिञ्चतीवाभिषिञ्चतीव । दक्षिणकर्णस्य दक्षिणश्रवणस्यावतंसिकालङ्कारस्तया, केतकीगर्भस्य केतकीमध्यस्य पालाशोऽभ्यन्तरपत्रं स एव लेखा तया रजनिकरस्य चन्द्रस्य । जिह्वालतयेव रसनावल्लीव । लावण्यलोभेन सौन्दर्यलोलुपतया । लिह्यमानमास्वाद्यमानं कपोलतलं गण्डस्थलं यस्याः सा । तमालवत्तापिच्छवत् श्यामलेन श्यामवर्णेन । मृगमदः कस्तूरिका तस्यामोदं निष्यन्दत इति तादृशेन कस्तूरीगन्धस्राविणा । तिलकबिन्दुना वर्तुलाकारतिलकेन मुद्रितमिव सञ्जातमुद्रमिव । मनोभवस्य कामस्य सर्वस्वं धनं वदनं मुखमुद्वहन्ती धारयन्ती । ललाटे भाले लासको नर्तकस्तस्य । सीमन्तचुम्बिनः सीमन्तावलम्बिनः । चटुलातिलकमणेर्ललाटस्थभूषणविशेषात् । यथोक्तम्—

"सुवर्णश्रृङ्खलाबद्धो नानारत्नौघमण्डितः ।
ललाटलम्ब्यलङ्कारश्चटुलातिलको मतः" ॥ इति ।

उदञ्चतोद्गच्छता । चटुलेन इतस्ततः स्फुरता । अंशुजालेन किरणनिवहेन । रक्तांशुकेनेव रक्तवसनेनेव । कृतं विहितं शिरोऽवगुण्ठनं मस्तकावरणं यया सा । पृष्ठे पाश्चाद्भागे प्रेङ्खन् लम्बमानः, अनादरेण संयमनं बन्धनमनादरसंयमनं तेन हेलया बन्धनेन शिथिलः श्लथीभूतो जूटिकाबन्धः केशकलापो यस्याः सा । नीलं नीलवर्णं चामरं बालव्यजनमेवावचूलं ध्वजाधोवसनं चिह्नं वा तदस्यास्तीति तादृशीव ।

कथाभट्टीया

वलयों के कान्ति रूपी जल से निम्न भाग में भुजलताओं का अभिषेक करती हुई, दक्षिण कर्णभाग में लम्बमान केवड़े की पंख से लावण्य के लोभ से चन्द्रमा की जिह्वा से ही मानों कपोलतल का चुम्बन कराने वाली, तमाल के समान श्याम कस्तूरी के तिलक बिन्दु से मुद्रित ( मुहर से युक्त ) कामदेव के सर्वस्वभूत मुख

चूडामणिमकरिकासनाथा मकरकेतुकेतुपताका,कुलदेवतेव चन्द्रमसः, पुनःसञ्जीवनौषधिरिव पुष्पधनुषः,वेलेव रागसागरस्य,ज्योत्स्नेव यौवनचन्द्रोदयस्य, महानदीव रतिरसामृतस्य, कुसुमोद्गतिरिव सुरततरोः,बालविद्येव वैदग्ध्यस्य, कौमुदीव कान्तेः, धृतिरिव धैर्यस्य, गुरुशालेव गौरवस्य, बीजभूमिरिव विनयस्य, गोष्ठीव गुणानाम्,

जयश्रीः

चूडायां शिखायां या मणे रत्नस्य मकरिका मीनत्वतया सनाथा सहिता । मकरकेतुरनङ्गस्तस्य केतोर्ध्वजस्य पताका वैजयन्ती । चन्द्रमसः शशिनः । कुलदेवतेव कुलक्रमागतदेवीव । पुष्पधनुषः कामस्य पुनः सञ्जीवनस्य पुनर्जीवनस्यौषधिरिव भेषजमिव । राग एव सागरस्तस्य रागसागरस्य रागसमुद्रस्य वेलेव तीरभूरिव । यौवनमेव तारुण्यमेव चन्द्रः शशी तस्योदयस्य समभ्युदयस्य ज्योत्स्नेव कान्तिरिव । रतिरसः प्रेमरस एवामृतं सुधा । "पीयूषममृतं सुधा" इत्यमरः । तस्य महानदीव महासरिदिव । सुरतं स्त्रीणामन्योन्यस्पर्शविशेषः । सम्प्रयोगो रतं रहःशयनं मोहनमित्यर्थान्तरम् । तदेव तरुर्वृक्षस्तस्य । कुसुमानां पुष्पाणामुद्गतिरिव प्रादुर्भाव इव वैदग्ध्यस्य चातुर्यस्य बालविद्येवाभिनवा विद्येव । बाल्यकालिकीशिक्षेव च । बालविद्या हि न कञ्चन मुञ्चति । कान्तेर्द्युतेः कौमुदीव ज्योत्स्नेव । तथाविधकान्त्यतिशयसम्भवात् । धैर्यस्य धीरताया धृतिरिव सन्तोष इव । उत्कर्ष इवेत्यर्थः । ध्रियते ययेति धृतिः । गौरवस्य महात्म्यस्य गुरुशालेव गुरुगृहमिव । विनयस्य नम्रतायाः । बीजभूमिरिवोपादानस्थानमिव । गुणानां दयादिगुणानां गोष्ठीव समि-

कथाभट्टीया

को धारण करने वाली, ललाट में नृत्य करने वाले तथा सीमन्तमणि में लम्बमान ललाट के भूषण से निकलते हुवे चञ्चल किरणों से मानो रक्तवस्त्र से ही शिरोभाग में अवगुण्ठन करने वाली, पृष्ठभाग पर लम्बमान केशपाश में अलंकृत अत एव नील चामर रूपी ध्वजा के वस्त्र से ही मानो युक्त तथा चूडामणि में स्थित मकरिका ( सुवर्ण की मछली ) से विभूषित कामदेव की पताका स्वरूप, चन्द्रमा की कुलदेवता के समान स्थित, कामदेव की संजीवन औषधि के सदृश, अनुरागरूप समुद्र की परम अवधि, यौवनरुप चन्द्रोदय की चन्द्रिका, रतिरस की महानदी, संभोगतरु के पुष्पोत्पत्तिरूप, चातुर्य की नवीन विद्या, कान्ति की

मनस्वितेव महानुभावतायाः, तृप्तिरिव तारुण्यस्य, कुवलयदलदाम-दीर्घलोचनया पाटलाधरया कुन्दकुड्मलस्फुटदशनया शिरीषमाला-सुकुमारभुजयुगलया कमलकोमलकरया बकुलसुरभिनिःश्वसितया चम्पकावदातया कुसुममय्येव ताम्बूलकरङ्कवाहिन्या महाप्रमाणाश्वतरारूढयानुगम्यमाना, कतिपयपरिचारकपरिकरा मालती समदृश्यत।)

जयश्रीः

तिरिव। समवाय इवेत्यर्थः। महानुभावताया महाप्रभावतायाः। मनस्वितेव प्रशस्तमनःशालित्वमिव। तारुण्यस्य यौवनस्य तृप्तिरिव सन्तोष इव। मालतीमासाद्य तारुण्यं सन्तुष्यतीति भावः। कुवलयदलदाम नीलकमलपत्रमाला तद्वद्दीर्घे आयते लोचने नयने यस्याः सा तया। पाटलः श्वेतरक्तोऽधरोऽधरोष्ठो यस्याः सा तया। कुन्दकुड्मलवन्माघ्यवृक्षकोरकवत् स्फुटा व्यक्ता दशना दन्ता यस्याः सा तया। शिरीषमालावत् शिरीषकुसुमश्रेणिवत्सुकुमारं कोमलं भुजयुगलं बाहुयुग्मं यस्याः सा तया। "भुजबाहू प्रवेष्टो दोः स्यात्" इत्यमरः। कमलवत्पद्मवत्करौ पाणी यस्याः सा तया। "करो वर्षोपले पाणौ रश्मौ प्रत्ययशुण्डयोः" इति मेदिनी। बकुलवद्वकुलप्रसूनवत् सुरभिः सुगन्धं निःश्वसितं श्वासो यस्याः सा तया। चम्पकवत् हेमपुष्पकवदवदातोज्ज्वला तया। "चम्पको हेमपुष्पकः" इत्यमरः। कुसुममय्येव पुष्पमय्येव। ताम्बूलकरङ्कं ताम्बूलभाजनं वहतीति तादृशया महाप्रमाणो दीर्घो योऽश्वतरस्तरुणोऽश्वस्तत्रारूढया तत्रोपविष्टया। "वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वम्" इति तनुत्वे तरप् प्रत्ययः। तनुत्वं च द्वितीयवयःप्राप्तिः। यद्वा—अश्वतरो गर्दभेनाश्वायां जात इति ज्ञेयम्। अनुगम्यमाना अनुध्रियमाणा। कतिपये नात्यल्पे

कथाभट्टीया

चन्द्रिका, धैर्य के सतोषरूप, गौरव का गृह, विनय की बीजभूमि, गुणों का स्थान, महानुभावता का आधार, तारुण्य की तृप्ति, कुवलय के समान दीर्घ नेत्र वाली तथा रक्त अधर से शोभित कुन्द के समान दन्तवाली एवं शिरीष के समान कोमल भुजाओं से शोभित कमल के समान कोमल हस्तों से युक्त बकुल के सदृश सुगन्धित निःश्वास वाली चम्पक पुष्प के समान कान्ति से शोभित पुष्प रूप ही मानो स्थित विशाल खच्चर पर विराजमान ताम्बूलवाहिनी से युक्त, कतिपय सेवकों से परिवृत, मालती को सावित्री तथा सरस्वती ने देखा)। दूर से

दूरादेव च दधीचप्रेम्णा सरस्वत्या लुण्ठितेव मनोरथैः, आकृष्टेव कुतूहलेन प्रत्युद्गतेवोत्कलिकाभिः, आलिङ्गितेवोत्कण्ठया, अन्तःप्रवेशितेव हृदयेन, स्नपितेवानन्दाश्रुभिः, विलुप्तेव स्मितेन, वीजितेवोच्छ्वसितैः, आच्छादितेव चक्षुषा, अभ्यर्चितेव वदनपुण्डरीकेण, सखीकृतेवाशया सविधमुपययौ । अवतीर्य च तुरगाद्दूरादेवावनतेन मूर्ध्ना प्रणाममकरोत् । आलिङ्गिता च ताभ्यां सविनयमुपाविशत् ।

जयश्रीः

नातिबहलाश्च परिचारकाः सेवकाः परिकराः सहचरा यस्याः सा तादृशी मालती दधीचदूती समदृश्यत व्यलोक्यत सावित्रीसरस्वतीभ्यामित्यर्थः ।

दूरादिति—दूरादेवारादेव । दधीचप्रेम्णा दधीचस्नेहेन । सरस्वत्या मनोरथैरभिलषितैः । लुण्ठितेव हृतेव । कुतूहलेन कौतुकेन । आकृष्टेवाहृतेव । उत्कलिकाभिः कामजस्मृतिभिः प्रत्युद्गतेव सम्मुखं प्रति गतेव । उत्कण्ठया—औत्सुक्येन । आलिङ्गितेव समाश्लिष्टेव । हृदयेन मनसा । अन्तःप्रवेशितेवाभ्यन्तरं स्थापितेव । गृहानागतोऽतिथिरपि गृहाभ्यन्तः प्रवेश्यते । आनन्दाश्रुभिरानन्दजन्यनेत्रजलप्रवाहैः । गृहागतेऽतिथौ मिथ आनन्दाश्रूणि प्रवर्तन्ते । स्मितेन मन्दहासेन विलुप्तेव निमग्नीकृतेव । उच्छ्वसितैर्निश्वासपवनैः । वीजितेव—उपवीजितेव कृतव्यजनेवेति यावत् । चक्षुषा नेत्रेण । आच्छादितेव आवृतेव । वदनमेव पुण्डरीकं वदनपुण्डरीकं मुखकमलं तेन । अभ्यर्चितेव पूजितेव । आशया समीहितेन । नानाविधतृष्णया वा सखीकृतेवात्मसहचरीकृतेव सविधं निकटमुपाययौ समागतवती । मालती सरस्वतीनिकटमाजगामेति भावः । तुरगादश्वात् । अवतीर्यावरुह्य । दूरादेव विप्रकृष्टादेव । अवनतेन नम्रेण । मूर्ध्ना शिरसा । प्रणामं नमस्कारमकरोत् व्यतनुत । ताभ्यां सावित्रीसरस्वतीभ्यामालिङ्गिता समाश्लिष्टा च सविनयं सप्रश्रयमुपाविशत् स्थितवती । सा मालतीति शेषः । ताभ्यां सावित्रीसरस्वतीभ्यां सप्रश्रयं सविनयं स-

कथाभट्टीया

ही दधीच के प्रम से सरस्वती के मनोरथों से लुण्ठित, कुतूहल से आकृष्ट, उत्कण्ठाओं से आलिङ्गित, हृदय से अन्तः प्रविष्ट ही मानो, आनन्दाश्रुओं से स्नपित, मन्दहास में निमग्न, निःश्वास से वीजित, नेत्रों से आच्छादित, मुखकमल से पूजित ही मानो स्थित, इच्छाओं से परिपूर्ण मालती सरस्वती के निकट आई ।

सप्रश्रयं ताभ्यां सम्भाषिता च पुण्यभाजमात्मानममन्यत। अकथयच्च दधीचसंदिष्टं शिरसि विनिहितेनाञ्जलिना नमस्कारम्। अगृह्णाच्चाकारतः प्रभृत्यग्राम्यतया तैस्तैरपि पेशलैरालापैः सावित्रीसरस्वत्योर्मनसी।

क्रमेण चातीते मध्यन्दिनसमये शोणमवतीर्णायां सावित्र्यां स्नातुमुत्सारितपरिजना साकूता मालती कुसुमप्रस्तरशायिनीं समुपसृत्य सरस्वतीमाबभाषे—'देवि, विज्ञाप्यं नः किञ्चिदस्ति रहसि। अतो मुहूर्तमवधानदानेन प्रसादं क्रियमाणमिच्छामि' इति। सरस्वती तु

जयश्रीः

म्भाषिता संलपिता। आत्मानं स्वं पुण्यभाजं पुण्यवन्तममन्यतामनुत। शिरसि मूर्ध्नि। निहितेन स्थापितेन। अञ्जलिना पाणिसम्पुटेन दधीचेन कुमारेण सन्दिष्टं कथितं नमस्कारं प्रणामं सावित्रीमुद्दिश्याकथयदुवाच। आकारतोऽवयवसंस्थादिसौन्दर्याद्याकारात्। प्रभृतीत्यव्ययम्। तत आरभ्येत्यर्थः। ग्रामे भवं ग्राम्यं न ग्राम्यमग्राम्यं तस्य भावस्तत्ता तयाग्राम्यतया विदग्धतया। तैस्तैः पेशलैर्हृद्यैरालापैः संलापैरपि सावित्रीसरस्वत्योर्मनसी मानसे। अगृह्णात्—जग्राह।

क्रमेणेति—क्रमेण क्रमशः। मध्यन्दिनसमये मध्याह्नकाले चातीते व्यतीते सति। सावित्र्यां शोणाख्यं नदं स्नातुमवतीर्णायां स्नानाय गतायां सत्याम्। उत्सारितोऽपसारितः परिजनः सेविकावर्गो यया सोत्सारितपरिजनापसारितपरिकरा। साकूता साभिप्राया मालती कुसुमप्रस्तरे पुष्पशयने शेते इति कुसुमशयनशयानां समुपसृत्य निकटमागम्य सरस्वतीमाबभाषे जगादेति हे देवि! नोऽस्माकं रहस्येकान्ते। किञ्चिद् विज्ञाप्यं निवेदनीयमस्ति। अतोऽस्मात्कारणान्मुहूर्तमल्पकालमवधानस्य दानमवधानदानं तेनावधानदानेन चित्तैकाग्र्येण क्रियमाणं विधीयमानं प्रसादं प्रसन्नतामिच्छामि समीहे। एकान्ते किंचिद्वच्मि तदवधानेन शृण्विति भावः।

कथाभट्टीया

मालती ने अश्व से उतर कर दूर से ही नम्रमस्तक से प्रणाम किया। सावित्री तथा सरस्वती से आलिङ्गित मालती विनयसहित बैठ गई। सावित्री व सरस्वती के सविनय प्रश्न से मालती ने अपने आपको पुण्यात्मा समझा। मस्तक पर अञ्जलि रख कर दधीच से संदिष्ट नमस्कार को सावित्री के अर्पण किया। तथा अग्राम्य कोमल वार्तालापों से शरीर तथा उन दोनों के चित्तों को वशीभूत किया। क्रम

दधीचसन्देशाशङ्किनी किं वक्ष्यतीति स्तनविनिहितवामकरनखकिरणदन्तुरितमुद्भिद्यमानकुतूहलाङ्कुरनिकरमिव हृदयमुत्तरीयदुकूलवल्कलैकदेशेन सञ्छादयन्ती, गलतावतंसपल्लवेन श्रोतुं श्रवणेनेव धावमानेनानवरतश्वाससन्दोहदोलायितां जीविताशामिव समासन्नलता-

जयश्रीः

दधीचस्य सन्देशस्तमाशङ्कत इति दधीचसन्देशाशङ्किनी दधीचोक्तसंलापवितर्का । सरस्वती तु । इयं मालती किं वक्ष्यतीति किं वदिष्यतीति विचार्य कुसुमशयनीयादुदगादिति क्रियाकारकसम्बन्धः । कीदृशी सरस्वती । स्तनयोः कुचयोर्विनिहितः स्थापितो यो वामकरः सव्यहस्तस्तस्य नखानां किरण रश्मिभिर्दन्तुरितं निम्नोन्नतम् । कुचस्थापितसव्यहस्तनखरश्मिनिम्नोन्नतमिति यावत् । उद्भिद्यमानः प्रादुर्भूयमाणः कुतूहलाङ्कुराणां कौतुकबीजानां निकरः संघातो यस्य तत् । प्रादुर्भूयमाणकौतुकाङ्कुरसंघातमिति यावत् । तादृशमिवोत्प्रेक्षालङ्कारः । हृदयं मानसम् । "स्वान्तं हृन्मानसं मनः" इत्यमरः । उत्तरस्मिन् देहे भवमुत्तरीयमुत्तरीयं च तद् दुकूलं च क्षौमं चेत्युत्तरीयदुकूलं तदेव वल्कलं वृक्षत्वक् तस्यैकदेशः प्रान्तभागस्तेन । उत्तरीयवृक्षत्वक्प्रान्तेनेति यावत् । "संव्यानमुत्तरीयं च" "क्षौमं दुकूलं स्यात्" इति चामरः । संछादयन्ती पिदधती । गलता पतता । अवतंसपल्लवेन कर्णाभरणकिसलयेन । श्रोतुं दधीचवृत्तं समाकर्णयितुं धावमानेन त्वरितं गच्छता श्रवणेनेव कर्णेन्द्रियेणेव । अनवरतं निरन्तरं यः श्वाससंदोहो निःश्वासनिवहस्तेन दोलायितां दोलामिवाचरितां प्रेङ्खन्तीमित्यर्थः । अजस्रनिश्वासनिवहप्रेङ्खन्तीमिति यावत् । जीविताशामिव जीवनाशामिव । समासन्ना समीपस्था या लता वल्ली

कथाभट्टीया

से मध्याह्न के व्यतीत होने पर तथा स्नान करने के लिये सावित्री के शोणनद में प्रवेश करने पर परिजन को हटा कर मालती ने साभिप्राय वचन पुष्पशय्या में लेटी हुई सरस्वती को कहा । देवि ! मुझे एकान्त में कुछ निवेदन करना है अतः थोड़ी देर मेरी तरफ अवधान देने का अनुग्रह करो यह मेरी इच्छा है । दधीच के संदेश की आशङ्का करने वाली, तथा "मालती क्या कहेगी" इस आशङ्का से स्तन पर स्थापित वाम हस्तके नखकिरणों से व्याप्त तथा उत्पन्न हुवे कौतुक से आप्लावित हृदय को अपने दुकूल के प्रान्त से आच्छन्न करती हुई, वार्ताश्रवण

मवलम्बमाना, समुत्फुल्लस्य मुखशशिनो लावण्यप्रवाहेण शृङ्गार-रसेनेव प्लावयन्ती जीवलोकम्, शयनकुसुमपरिमललग्नैर्मधुकरकदम्बकैर्मदनानलदाहश्यामलैर्मनोरथैरिव निर्गत्य मूर्तैरुत्क्षिप्यमाणा, कुसुमशयनीयात्स्मरशरसंज्वरिणी, मन्दं मन्दमुदगात्। 'उपांशु कथय' इति कपोलतलप्रतिबिम्बितां लज्जयेव कर्णमूलं मालतीं प्रवेश-

जयश्रीः

ताम्। समीपस्थवल्लीमिवेति यावत्। अवलम्बमाना समाश्रयन्ती। समुत्फुल्लस्य विकसितस्य मुखशशिनो वदनचन्द्रस्य लावण्यस्य प्रवाहस्तेन लावण्यप्रवाहेण सौन्दर्यनिर्झरेण। शृङ्गारश्चासौ रसश्च शृङ्गाररसस्तेन शृङ्गाराख्यरसेन उज्ज्वलरसेनेति भावः। इवोत्प्रेक्षायाम्। जीवलोकं प्राणिनिवहम्। प्लावयन्ती क्षालयन्ती। शयने तल्पे यानि कुसुमानि प्रसूनानि तेषां परिमलेन गन्धेन लग्नाः संसक्तास्तैस्तथोक्तैः। तल्पप्रसूनगन्धसंसक्तैरिति यावत्। मधुकराणां भ्रमराणां कदम्बकानि निवहास्तैर्भ्रमरनिवहैरिति यावत्। मदनानलेन कामाग्निना यो दाहो ज्वालनं तेन श्यामलैः श्यामवर्णैः। कामाग्निसन्तापश्यामीभूतैरिति यावत्। मूर्तैरिव देहधारिभिरिव। मनोरथैरभिलषितैः। निर्गत्य निर्गम्य। उत्क्षिप्यमाणा—उत्तोल्यमाना। स्मरस्य कामस्य शरैर्बाणैः संज्वरः सन्तापोऽस्त्यस्या इति स्मरशरसंज्वरिणी कामबाणसंतप्तेति यावत्। कुसुमानां प्रसूनानां शयनीयं तल्पं तस्मात् पुष्पतल्पात्। मन्दं मन्दं शनैरुदगादुत्तस्थौ। उपांशु सुगुप्तं कथय वदेति कपोलतले गण्डपालिप्रदेशे। प्रतिबिम्बितां प्रतिफलितां मालतीं लज्जयेव व्रीडयेव कर्णमूलं

कथाभट्टीया

के लिये दौड़ते हुवे कर्ण ( कान ) के समान गिरते हुवे कर्ण के किसलय से निरन्तर श्वास की वृद्धि से चञ्चल जीवन की आशा की तरह समीपस्थित लता को अवलम्बित करती हुई, विकसित मुखचन्द्र के लावण्यरस से शृङ्काररस के सदृश जीवलोक को आप्लावित करती हुई, पुष्पशय्या के गन्ध से लग्न हुए भ्रमरसमूहों से मदन की अग्नि से कृष्ण वर्ण वाले मूर्तिमान् मनोरथों से ही मानो हृदय से निकल कर उठाई गई, कामज्वर से व्याप्त सरस्वती ने पुष्पशय्या से धीरे धीरे उत्थान किया। "एकान्त में गुप्तरूप से कहना" इस कारण से कपोल

यन्ती मधुरया गिरा सुधीरमुवाच—'सखि मालति, किमर्थमेवमभिदधासि । काहमवधानदानस्य शरीरस्य प्राणानां वा । सर्वस्याप्रार्थितोऽपि प्रभवत्येवातिवेलं चक्षुष्यो जनः । सा न काचिद्या न भवसि मे स्वसा सखी प्रणयिनी प्राणसमा च । नियुज्यतां यावतः कार्यस्य क्षमं क्षोदीयसो गरीयसो वा शरीरकमिदम् । अनवस्करमाश्रवं मे त्वयि हृदयम् । प्रीत्या प्रतिसरा विधेयास्मि ते । व्यावृणु वरवर्णिनि,

जयश्रीः

श्रोत्रमूलम् । प्रवेशयन्ती निदधती । मधुरया मनोरमया गिरा वाण्या सुधीरं सधैर्यमुवाच जगाद सरस्वतीति शेषः । हे सखि मालति ! एवमनेन प्रकारेण किमर्थमभिदधासि कथयसि । अवधानदानस्य चित्तैकाग्र्यदानस्य, शरीरस्य वपुषः, प्राणानां वा स्वामिनी । अहं का । नैतानि ममायत्तानि सर्वाणि तवैवेति सारल्यं द्योतितम् । सर्वस्य प्राणशरीरादेः । चक्षुष्योऽनुकूलो जनः । अतिवेलमतिमात्रम् । अप्रार्थितोऽप्यकृतप्रार्थनोऽपि । अनुक्तोऽपीति यावत् । प्रभवति प्रभुर्भवति । अधिक्रियत इति भावः । सा त्वं या काचित्स्त्री नास्ति । या स्त्री मे मम स्वसा भगिनी, सखी मित्रम् , प्रणयिनी प्रिया, प्राणसमा जीवनसमा च न भवसि न जायसे । सर्वं त्वमेवेति भावः । अतिशयेन क्षुद्रं क्षोदीयस्तस्य क्षोदीयसः क्षुद्रतरस्य स्वल्पस्येति यावत् । अतिशयेन गुरुर्गरीयस्तस्य महतो वा यावतः सर्वस्य वा कार्यस्य कर्मणः क्षमं योग्यम् । इदं शरीरकं क्षुद्रं वपुर्नियुज्यतां कार्येऽधिक्रियताम् । मे मम हृदयं मानसं त्वयि भवत्यां अनवस्करमपनीतमलं निर्मलमिति यावत् । "निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्" इत्यमरः । आश्रवं वचने स्थितम् । "वचने स्थित आश्रवः" इत्यमरः । प्रीत्या प्रेम्णा प्रतिसरा नियोज्या । "भवेत्प्रतिसरो मन्त्रभेदे । आरक्षे करसूत्रे च नियोज्ये त्वन्यलिङ्गकः" इति मे-

कथाभट्टीया

तल में प्रतिबिम्बित मालती से लज्जा से ही मानो कर्णमूल में प्रविष्ट करती हुई सरस्वती मधुर वाणी से बोली । हे सखि मालति ! इस प्रकार क्यों कहती है । मैं अवधान देने वाली कौन हूं । शरीर वा प्राण की स्वामिनी तू ही है । बन्धुजन बिना प्रार्थना के सब का स्वामी होता है । एसा कोई बन्धु नही है कि जो तुम न हो । अर्थात् तुम मेरी भगिनी, सखी, प्रेमपात्र तथा प्राणसम हो । अति-

विवक्षितम्' इति । सा त्ववादीत्-'देवि, जानास्येव माधुर्यं विषयाणाम्, लोलुपतां चेन्द्रियग्रामस्य, उन्मादितां च नवयौवनस्य, पारिप्लवतां च मनसः । प्रख्यातैव मन्मथस्य दुर्निवारता । अतो न मामुपालम्भेनोपस्थातुमर्हसि । न च बालिशता चपलता चारणता वा वाचालतायाः कारणम् । न किञ्चिन्न कारयत्यसाधारणा स्वामिभक्तिः । सा

जयश्रीः

दिनी । ते तव विधेया वश्यास्मि । वरवर्णोऽस्त्यस्या इति वरवर्णिनी तत्सम्बुद्धौ हे वरवर्णिनि ! वरारोहे ! "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" इत्यमरः । विवक्षितं वक्तुमिष्टं वक्तव्यं व्यावृणु वर्णय । इति सरस्वत्युवाचेति सम्बन्धः ।

सा त्विति-सा मालती त्ववादीदुवाच । विषयाणां चन्द्रचन्दनवनितामाल्यादीनामुपभोग्यानां माधुर्यं मनोहारित्वम्, इन्द्रियग्रामस्येन्द्रियनिवहस्य लोलुपतां साभिलाषत्वम्, नवं च तत् यौवनं च नवयौवनं तस्य नवयौवनस्य नवीनतारुण्यस्य चोन्मादितामुन्मादकारित्वम् । मनसश्चित्तस्य पारिप्लवतां तरलताम् । "चञ्चलं तरलं चैव पारिप्लवपरिप्लवे" इत्यमरः । जानास्येव वेत्स्येव । मनो मथ्नातीति मन्मथस्तस्य कामस्य दुर्निवारता दुर्बाध्यता । प्रख्यातैव प्रसिद्धैव । अतोऽस्मात्कारणात् । मां मालतीम् । उपालम्भेन सनिन्दपरिभाषणेन । नोपस्थातुं ग्रहीतुमर्हसि समर्थयसे । बालिशता मूर्खता, चपलता चञ्चलता, चारणता बन्दिजनता धूर्तता वा । वाचलतायां मम मुखरतायां न कारणं निदानम् । मम वाचालत्वे बालिशतादयो न निमित्तमिति । असाधारणानन्यसदृशी विशिष्टेति यावत् । स्वामिभक्तिः प्रभुसेवा किञ्चिन्न कारयति इति न किन्तु सर्वमेव कार-

कथाभट्टीया

स्वल्प वा अति गुरु किसी भी कार्य के योग्य इस शरीर को आज्ञा दीजिये । निर्मल मेरा हृदय तेरी आज्ञा में स्थित है । प्रीति से मैं तेरी आज्ञाकारिणी हूं । हे वरवर्णिनि ! जो मन में हो सो ही प्रकाशित करो । मालती कहने लगी कि देवि ! चन्द्रपुष्प आदि पदार्थों की मधुरता को तथा इन्द्रियों की लोलुपता को, नवयौवन की उन्मादिता को, एवं मन की चञ्चलता को तुम जानती ही हो । कामदेव की प्रबलता प्रसिद्ध ही है । अतः मुझे उपालम्भ मत देना । मूर्खता, चपलता वा स्तुतिकारिता, मेरी वाचालता का कारण नहीं है । असाधारण स्वामिभक्ति

त्वं देवि, यदैव दृष्टासि देवेन तत एवारभ्यास्य कामो गुरुः, चन्द्रमा जीवितेशः, मलयमरुदुच्छ्वासहेतुः आधयोऽन्तरङ्गस्थानेषु, सन्तापः परमसुहृत्, प्रजागर आप्तः, मनोरथाः सर्वगताः, निश्वासा विग्रहाग्रेसराः, मृत्युः पार्श्ववर्ती, रणरणकः सञ्चारकः, सङ्कल्पा बुद्ध्युपदेश-

जयश्रीः

यति । हे देवि ! सा दिव्यरूपसम्पन्ना त्वं सरस्वती । यदैव देवेन दधीचेन मम प्रभुणा । दृष्टासि विलोकितासि । तत एवारभ्य तदवधिमादाय । "देवी देवेन" इति पदद्वयं द्वयोः समानतामभिव्यनक्ति । कामो मदनो गुरुरुपदेष्टा, उपाध्यायश्च । तद्वशवर्त्तित्वात्तस्य । यश्च राजा तस्य गुरुरवश्यं भवति । चन्द्रमाः शशी जावितस्य जीवनस्येशः स्वामी । शिशिरतया मदनदाहशमनहेतुत्वात् । जीवितेशो मृत्युश्च । चन्द्रो हि समुद्दीपकत्वान्मृत्युरेव । राजपक्षे—जीवितेशः कश्चित्पुरोहिताग्रेसरः । मलयमरुन्मलयानिलः । उच्छ्वसनमुच्छ्वासस्तत्र हेतुरुच्छ्वासहेतुः श्वासनिमित्तम् । अथ च श्वासोत्क्रमणे हेतुः । राजपक्षे सचिवादिर्जनः श्वासकारणं भवति आधयो मानसव्यथाः । अङ्गस्यान्त इत्यन्तरङ्गम्, अन्तरङ्गं यानि स्थानानि तेषु तथोक्तेषु । शरीरान्तः प्रान्तेषु इति यावत् । इतरत्र राजपक्षे—अन्तरङ्गस्थानेषु विश्वस्तजनाधिकारेषु । सन्तापः कामजः परमसुहृत्परं मित्रम् । परं प्रकृष्टम् । असुहृत् प्राणहारकः । अन्यत्र परमसुहृत् परममित्रम् । प्रजागरः प्रबोधः । आप्तो हितैषी । प्रजागर आप्तः प्राप्तः । स दधीचो जागर्त्येव न शेते कामातुरया । मनोरथा अभिलषितानि । सर्वगताः सर्वत्र गामिनः । यद्वा सर्वगता नानाविधाः । राज्ञश्चारा अपि सर्वत्र गच्छन्ति । निश्वासाः श्वासपवनाः । विग्रहस्य शरीरस्याग्रेसरा अग्रगामिनः । शरीरव्यापिन इति यावत् । दीर्घ निश्वसितीति भावः । राजपक्षे—भटा अपि समराग्रेसरा जायन्ते । मृत्युः कालः पार्श्ववर्ती निकटवर्ती । राज्ञोऽपि निकटे मृत्युस्तिष्ठत्येव । रणरणकः उत्कण्ठाविशेषः । अरतिकृतं दुःखमित्यर्थः । सञ्चारकः प्रेरकः । एकत्र स्थितं वस्तु परत्र सञ्चारयतीति

कथाभट्टीया

क्या नही कराती । हे देवि ! जिस दिन से तुमको देखी है उसी दिन से हमारे स्वामी का कामदेव गुरु है, चन्द्रमा जीवन का स्वामी है, मलयाचल का पवन जीवन का कारण है । अन्तरङ्ग (गुप्त) स्थानों में मानसिक व्यथा है । संताप परम-

वृद्धाः । किं वा विज्ञापयामि । अनुरूपो देव्या इत्यात्मसम्भावना, शीलवानिति प्रक्रमविरुद्धम्, धीर इत्यवस्थाविपरीतम्, सुभग इति त्वदायत्तम्, स्थिरप्रीतिरिति निपुणोपक्षेपः, जानाति सेवितुमित्यस्वामिभावोचितम्, इच्छति दासभावमामरणात्कर्तुमिति धूर्तालापः, भवन-

जयश्रीः

सञ्चारकः प्रचारकः । राजपक्षे—सञ्चारको दूतविशेषः । द्विविधा हि राज्ञश्चाराः—संस्थाः, सञ्चारकाश्च, सङ्कल्पा मानसकर्माणि विचारा इति यावत् । बुद्धयै य उपदेशस्तत्र वृद्धा बुद्ध्युपदेशवृद्धा मतिशिक्षामहान्तः । राजनिकटेऽपि वृद्धाः स्थविराः समुपदिशन्ति । किमधिकं वा विज्ञापयामि निवेदयामि । देव्याः सरस्वत्याः । अनुरूपोऽनुकूलः स दधीच इत्यात्मनः स्वस्य सम्भाववना संमानना । स्वकीयगौरवं स्वेनैव जनेन क्रियत इति नोचितमिति भावः । शीलोऽस्यास्तीति शीलवान् सुशीलो दधीच इति प्रक्रमस्य प्रस्तुतस्य विरुद्धं प्रतिकूलम् । प्रस्तुतविरोधीति यावत् । स धीरो धीरतायुक्त इति, अवस्थाविपरीतं विरहिदशाप्रतिकूलम् । अधुना दधीचस्याधैर्यादिति भावः । स सुभगः सुन्दर इति कथनं त्वदायत्तं तवाधीनम् । त्वं यदि तं सुन्दरमपि तादृशं न मन्येथाः, तदा स कथं सुन्दरो मन्येत । अतः स सुन्दर इत्यहं न शक्नोमि वक्तुम् । स्थिरा निश्चला प्रीतिः स्नेहो यस्य स इति स्थिरप्रीतिर्निश्चलस्नेहः स दधीच इति वाक्ये निपुणस्योपक्षेपो निपुणोपक्षेपो बुद्धिमत्प्रक्रमः । सेवितुं परिचरितुं प्रणयेनानुगन्तुमित्यर्थः । जानाति वेत्ति । इत्यस्वामिभावस्योचितं स्वामिभावानुपयुक्तम् । नहि सेवकान् स्वामिनः सेवन्ते । स च भवत्याः स्वामीति तदुक्तमनुपयुक्तम् । आमरणान्मृत्युपर्यन्तम् । दासभावं दास्यं कर्तुं विहितुमिच्छति समीहते । इति धूर्तालापः प्रतारणावच-

कथाभट्टीया

मित्र है । जागरण आप्त पुरुष है । नानाप्रकार के मनोरथ है । निश्वास सब शरीर में व्याप्त है । मृत्यु समीपस्थित है, उत्कण्ठा प्रेरक है । संकल्प ( मानसिक विचार ) बुद्धि के उपदेशक है । मैं क्या निवेदन करूं । दधीच आप के योग्य है यह कहना आत्मश्लाघा करना है। वह सुशील है यह कथन प्रस्तुत विषय के प्रतिकूल है । वह धीर है यह कथन भी उसकी अवस्था के प्रतिकूल है । वह सुन्दर है यह कथन तेरे अधीन है । उसकी प्रीति स्थिर रहती है यह चतुर पुरुष कह

स्वामिनी भवसीत्युपप्रलोभनम्, पुण्यभागिनी भजति भर्तारं तादृशमिति स्वामिपक्षपातः, त्वं तस्य मृत्युरित्यप्रियम्, अगुणज्ञासीत्यधिक्षेपः, स्वप्नेऽस्य बहुशः कृतप्रसादासीत्यसाक्षिकम्, प्राणरक्षार्थमर्थयत इति कातरता, तत्रागम्यतामित्याज्ञा, वारितोऽपि बलादागच्छतीति परिभवः । तदेवमगोचरे गिरामसीति श्रुत्वा देवी प्रमाणम्'

जयश्रीः

नम् । धूर्ता हि स्वकार्यसाधनायैवं ब्रुवते । भवनस्वामिनी गृहस्वामिनी भवसि । इत्युपप्रलोभनं लोभप्रकटनम् । पुण्यभागिनी पुण्यवती स्त्री तादृशं दधीचसदृशं भर्त्तारं स्वामिनं भजति प्राप्नोतीत्यर्थः । इति स्वामिनि दधीचे पक्षपातःस्नेहातिरेकः । त्वं सरस्वती । तस्य दधीचस्य मृत्युः काल इति कथनमप्रियमशुभम् । त्वां विना स मरिष्यतीति वचनमप्रियमित्यर्थः । अगुणज्ञा गुणानामनभिज्ञा । इत्यधिक्षेपस्तव तिरस्कारः । अस्य दधीचस्य स्वप्ने बहुशोऽनेकवारं कृतो विहितः प्रसादः स्वदर्शनेनानुग्रहो यया सा विहितदर्शनानुग्रहेति यावत् । त्वमसीति वचनमसाक्षिकं साक्षिशून्यम् । स्वप्नेऽपि दधीचस्त्वामेव पश्यतीत्यर्थः। प्राणरक्षार्थं स्वजीवनार्थम् । अर्थयते याचते स इति कातरता भीरुत्वम् । तत्र दधीचनिकटे । आगम्यतामित्याज्ञा—आदेश इति । त्वया वारितोऽपि बलात्प्रसह्य । आगच्छतीति समायतीति परिभवस्तिरस्कारो दधीचस्य। तदेवमनेन प्रकारेण गिरां वाचामगोचरेऽविषयेऽसीति श्रुत्वा समाकर्ण्य देवी सरस्वती प्रमाणं निश्चयकर्त्री । इत्यभिधाय

कथाभट्टीया

सकते हैं । वह प्रणय की सेवा करना जानता है यह कथन स्वामिभाव के उचित नहीं है । वह जीवनपर्यन्त आपका दासत्व स्वीकार करना चाहता है यह धूर्तता का कथन है । तू गृह की स्वामिनी बन जावेगी यह कथन ललचाने वाला है । वैसे भर्ता को पुण्यात्मा प्राप्त करती है यह कथन अपने स्वामी का पक्षपात करना है । तेरे विना उसकी मृत्यु है यह कथन अशुभ है । तू गुणज्ञ नहीं है यह कहना तेरा तिरस्कार करना है । स्वप्न में भी इसने तुमको ही प्रसन्न किया है इस कथन का कोई साक्षी नहीं है । अपने जीवन के लिये तुमको चाहता है इससे कातरता जानी जाती है । वहां चलै यह कथन आज्ञा के समान हैं । तेरे निषेध करने पर भी वह बलात् आवेगा यह कथन दधीच का निन्दक है । इस प्रकार यह विषय

इत्यभिधाय तूष्णीमभूत्।

अथ सरस्वती प्रीतिविस्फारितेन चक्षुषा प्रत्यवादीत्—'अयि, न शक्नोमि बहु भाषितुम्। एषास्मि ते स्मितवादिनि वचसि स्थिता। गृह्यन्ताममी प्राणाः' इति। मालती तु 'यदाज्ञापयस्यतिप्रसादः' इति व्याहृत्य प्रहर्षपरवशा प्रणम्य प्रजविना तुरगेण ततार शोणम्। अगाच्च दधीचमानेतुं च्यवनाश्रमपदम्। इतरा तु सखीस्नेहेन सावित्रीमपि विदि-

जयश्रीः

कथयित्वा मालती तूष्णीमभूत् जोषमाससाद।

अथेति–अथ मालतीकथनानन्तरम्। सरस्वती देवी। प्रीत्या प्रेम्णा विस्फारितं विकसितं तेन प्रेमविकसितेनेति भावः। चक्षुषा नयनेन प्रत्यवादीत् प्रत्युवाच। अयि मालति! न शक्नोमि न समर्थास्मि बहु भाषितुं वदितुम्। स्मितं यथा स्यात्तथा वदलाति स्मितवादिनी तत्सम्बुद्धौ हे स्मितवादिनि मन्दहासभाषिणि! एषाहं ते तव वचसि वचने स्थितास्मि। तव कथनं करिष्यामीति भावः। अमी प्राणा गृह्यन्तां त्वदायत्तीक्रियन्ताम्। इति प्रत्यवादीदिति सम्बन्धः। मालती तु दधीचदूती तु। अतिप्रसादोऽनुग्रहः। यदाज्ञापयसि यत्समादिशसि इति व्याहृत्य कथयित्वा। प्रहर्षेणानन्देन परवशा परायत्ता। आनन्दपराधीनेति यावत्। प्रणम्य नमस्कृत्य। प्रजविना वेगवता। तुरगेणाश्वेन शोणं नदं ततारोत्तीर्णा। दधीचं कुमारमानेतुं सरस्वतीनिकटे प्रापयितुं च्यवनाश्रमपदं च्यवनमुनेराश्रमस्थानमगाज्ज-

कथाभट्टीया

वाचातीत है। मैं क्या कहूं तू ही इसमें निश्चय कर सकती है। यह कह कर मालती चुप हो गई। इसके अनन्तर प्रेम से विकसित नेत्र वाली सरस्वती ने प्रत्युत्तर दिया कि मैं अधिक नहीं कह सकती। हे स्मितवादिनि! तेरे कथन को मैं स्वीकार करती हूं। इन प्राणों को स्वीकृत करो। "जो तुम कहती हो यह तुम्हारी कृपा है" यह कह कर मालती हर्षित होकर प्रणाम करके अतिवेग वाले घोड़े से शोणनद को तैर गई। और दधीच को लाने के लिये च्यवन के आश्रम को पहुंची। सरस्वती ने सखीस्नेह से सावित्री को भी यह सूचना दे दी। उत्क-ण्ठित तथा क्लान्तचित्त से कल्प के समान किसी प्रकार से दिन को व्यतीत किया। सूर्य के अस्त होने पर तथा अन्धकार के व्याप्त होने पर, हासयुक्त हो

तवृत्तान्तामकरोत् । उत्कण्ठाभारभृता च ताम्यता चेतसा कल्पायितं कथङ्कथमपि दिवसशेषमनैषीत्, अस्तमुपगतवति, भगवति गभस्तिमति, स्तिमिततरमवतरति तमसि, प्रहसितामिव सितां दिशं पौरन्दरीं दरीमिव केसरिणि मुञ्चति चन्द्रमसि, सरस्वती शुचिनि चीनांशुकसुकुमारे तरङ्गिणि दुगूलकोमले शयन इव शोणसैकते समुपविष्टा, स्वप्नकृत-

जयश्रीः

गाम । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । इतरा तु सरस्वती तु सख्याः स्नेहः सखीस्नेहस्तेन वयस्याप्रणयेन । सावित्रीमपि । विदितो ज्ञातो वृत्तान्तो यया सा विदितवृत्तान्ता ज्ञातोदन्ता ताम् । अकरोच्चकार । उत्कण्ठाया उत्सुकताया भार उत्कण्ठाभारस्तं बिभर्तीति उत्कण्ठाभारभृत्तेन समुत्सुकताभारधारकेण । अत एव ताम्यता क्लिश्यता च चेतसा मानसेन कल्पायितं कल्प इवाचरितवान् कल्पायितं श्वेतवराहादिकल्पवद्दीर्घं ब्रह्मणो दिनमिवेति यावत् । "कल्पः शास्त्रे विधौ न्याये संवर्त्ते ब्रह्मणो दिने" इत्यमरः । कथं कथमपि केनापि प्रकारेण । दिवसस्य दिनस्य शेषमवशिष्टभागमनैषीत् यापयामास । भगवति ऐश्वर्यादिमति किरणमालिनि "गभस्तिघृणिरश्मयः" इत्यमरः । सूर्य इत्यर्थः । अस्तमस्ताचलमुपगतवति प्राप्तवति सति । तमस्यन्धकारे । स्तिमिततरं तरलतरम् । "स्तिमितस्तरले क्लिन्ने" इति रुद्रः । अवतरति सति व्याप्नुवति सति । चन्द्रमसि शशिनि । प्रहसितामिव जातहासामिव । सितां शुभ्रवर्णाम् । पुरन्दरस्यैषा पौरन्दरी तामैन्द्रीम् । पूर्वामित्यर्थः । दिशं काष्ठाम् । केसरिणि सिंहे दरीमिव गुहामिव मुञ्चति सति त्यजति सति । अत्रोपमालङ्कारः । सरस्वती प्रतिपालयमासेति क्रियाकारकसम्बन्धः । सरस्वती देवी । शुचिनि शुद्धे निर्मल इति यावत् । चीनांशुकवत्सुकुमारं तस्मिन् चीनांशुकसुकुमारे चीनदेशीयसूक्ष्मवस्त्रवत्कोमले । तरङ्गाः सन्त्यस्येति तत्र तरङ्गिणि तरङ्गरेखाराजिते भङ्गियुक्त इति यावत् । दुकूलेनोत्तरीयवसनेन कोमले सुकुमारे । शोणसैकते शोणनदस्य सिकतामयतीरे । शयन इव तल्प इव समुपविष्टोपस्थिता । स्वप्ने कृता विहिता या प्रार्थना तस्यां

कथाभट्टीया

मानो स्थित श्वेतवर्णवाली पूर्वदिशा के गुहा को सिंह के समान त्यागने पर, स्वच्छ चीनांशुक के समान कोमल एवं तरङ्गिणी शोणनद की बालुकामय भूमि में

प्रार्थनापादपतनलग्नां दधीचचरणनखचन्द्रिकामिव ललाटिकां दधाना, गण्डस्थलादर्शप्रतिबिम्बितेन 'चारुहासिनि, अयमसावाहृतो हृदयदयितो जनः' इति श्रवणसमीपवर्तिना निवेद्यमानमदनसन्देशेवेन्दुना, विकीर्यमाणनखकिरणचक्रवालेन बालव्यजनीकृतचन्द्रकलाकलापेनेव करेण वीजयन्ती स्वेदिनं कपोलपट्टम्, 'अत्र दधीचादृते न केनचित्प्र-

जयश्रीः

यत्पादपतनं चरणपतनं तेन लग्ना ताम् । स्वप्नसमयविहितयाचनाचरणपतनसंसक्तामिति यावत् । दधीचस्य कुमारस्य चरणयोः पादयोर्नखा नखरास्तेषां चन्द्रिका कान्तिस्तामिव । अत्रोत्प्रेक्षा । ललाटिकां निटिलतटालङ्कारम् । दधाना बिभ्राणा । गण्डयोः कपोलयोः स्थले एवादर्शस्तत्र प्रतिबिम्बितः प्रतिफलितप्रतिमस्तेन । कपोलप्रान्तदर्पणप्रतिफलितप्रतिमेनेति यावत् । चारु रम्यो हासोऽस्याः अस्तीति तच्छीला चारुहासिनी तत्सम्बुद्धौ । मनोहरस्मिते ! । अयमसौ हृदयदयितो मानसप्रियः जनः । आहृत आनीतः । इति श्रवणयोः कर्णयोः समीपे वर्तते इति श्रवणसमीपवर्ती तेन । कर्णनिकटवर्तिना । इन्दुना चन्द्रमसा । मदनस्य सन्देशो मदनसन्देशः । निवेद्यमानः कथ्यमानो मदनसन्देशो मन्मथवाचिकं यस्याः सा तादृशीव । कथ्यमानमन्मथवाचिकेवेति यावत् । विकीर्यमाणं विक्षिप्यमाणं नखकिरणानां कररुहांशूनां चक्रवालं समूहो यस्मात्स तेन तथोक्तेन । विक्षिप्यमाणकररुहांशुसमूहेनेति यावत् । बालव्यजनीकृतश्चामरीकृतश्चन्द्रकलानां शशिरश्मीनां कलापो निवहो येन स तेन तथोक्तेन चामरीकृतशशिरश्मिनिवहेनेति यावत् । इवात्रोत्प्रेक्षायाम् । करेण हस्तेन । स्वेदोऽस्यास्तीति स्वेदी तं स्वेदिनं घर्मजलाविलं कपोलपट्टं गण्डपालिं वीजयन्ती वायुं चालयन्ती । अत्र स्तनमध्ये

कथाभट्टीया

शय्या के समान समुपस्थित, स्वप्न के पादपतन से लग्न दधीच के चरणनखों की चन्द्रिका के समान ललाट में भूषण को धारण करने वाली, कपोलरूपी आदर्श में प्रतिबिम्बित अतएव कर्ण के निकटवर्ती चन्द्रमाद्वारा "अयिचारुहसिते ! यह तुमारा प्रियतम आ गया है" इस मदन के संदेश को प्राप्त होने वाली, चन्द्रमा की किरणों के चामर के समान स्थित नख किरणों द्वारा शोभित हस्त से कपोल के स्वेद मिटाने के लिये वायुचालन करती हुई, "इस हृदय में दधीच के

वेष्टव्यम्' इति तिरश्चीनं चित्तभुवा पातितां विलासवेत्रलतामिव बालमृणालिकामधिस्तनं स्तनयन्ती कथमपि हृदयेन वहन्ती प्रतिपालयामास । आसीच्चास्या मनसि-'अहमपि नाम सरस्वती यत्रामुना मनोजन्मना जघन्येव परवशीकृता । तत्र का गणनेतरासु तपस्विनीष्वतितरलासु तरुणीषु' इति ।

आजगाम च मधुमास इव सुरभिगन्धवहः, हंस इव कृतमृणाल-

जयश्रीः

दधीचादृते दधीचं विना न केनचित्प्रवेष्टव्यं न गन्तव्यमिति तिरश्चीनं तिर्यक् यथा तथा चित्तभुवा कामेन पातितां स्थापितां विलासस्य क्रीडाया वेत्रलता वेत्रयष्टिस्तां विलासवेत्रलतां क्रीडावेत्रलतां क्रीडावेत्रयष्टिमिवेति यावत् । बाला चासौ मृणालिका च बालमृणालिका तां नवीनबिसतन्तुमालाम् । स्तनयोरधि इत्यधिस्तनं कुचयोरुपरि । विभक्त्यर्थेऽव्ययीभावः । स्तनयन्ती कलयन्ती । स्तनिः शब्दार्थश्चौरादिको धातुः । कथं कथमपि केनापि प्रकारेण हृदयेन मनसा वहन्ती धारयन्ती । प्रतिपालयामास प्रतीक्षते स्म । दधीचमिति शेषः । अस्याः सरस्वत्या मनसि चासीदयं विचारः । बभूवेति भावः । अहमपि दिव्यप्रभावापि । सरस्वती शारदा । नाम यत्र अमुनानेन मनोजन्मना कामेन । जघन्येव क्षुद्रेव । परवशीकृता परायत्तीकृता दधीचाधीनीकृतेति यावत् । तत्र मदने । इतरास्वन्यासु तपस्विनीषुवराकीषु । अतितरलासु चञ्चलासु । तरुणीषु युवतिषु का गणना को विवेकः । यत्राहं सरस्वत्येव कामपरवशीभूता तत्रान्यासां तरुणीनां का कथा । ताः कामसन्तप्ता भवेयुरेवेति नाश्चर्यम् ।

अथ दधीचागमं प्रस्तौति—आजगामेत्यादिना । मालतीसहचरा दधीच

कथाभट्टीया

अलावा अन्य किसी का प्रवेश नहीं हो सकता" इसलिये कामदेव से स्थापित की गई वेत्रयष्टि के समान बालमृणालों को स्तनपर रखकर हृदय से किसी प्रकार धारण करती हुई, सरस्वती दधीच की प्रतीक्षा करने लगी । सरस्वती ने विचार किया कि मैं सरस्वती ही क्षुद्र पुरुष के समान कामदेव के अधीन हो गई तो अन्य अति चञ्चल युवतियों की तो बात ही क्या। वे तो अतिशीघ्र ही कामवश होती होंगी। सुगन्धित वायु से युक्त वसन्त की तरह सुगन्ध से युक्त, मृणाल को खाने वाले

धृतिः, शिखण्डीव घनप्रीत्युन्मुखः, मलयानिल इवाहितसरसचन्दनधवलतनुलतोत्कम्पः, कृष्यमाण इव कृतकरकचग्रहेण ग्रहपतिना,

जयश्रीः

आजगामेति क्रियाकारकसम्बन्धः। स दधीचो मधुमास इव चैत्रमास इव। वसन्तसमय इवेति यावत्। "स्याच्चैत्रे चैत्रिको मधुः" इत्यमरः। सुरभि गन्धं वहतीति सुरभिगन्धवहः सुगन्धिद्रव्यधारी। मधुमासश्च सुरभिः सुगन्धी गन्धवहो वायुर्यस्मिन्स तादृशः। सुगन्धिवायुशालीति यावत्। अत्र शाब्दी पूर्णोपमालङ्कारः। हंस इव मराल इव। कृता विहिता मृणालानां कमलतन्तूनां धृतिर्धारणं येन सः। बिसतन्तुधारीति यावत्। दधीचो हि कामदाहोपशमकमृणालधारणं कृतवान्। हंसपक्षे—कृता विहिता मृणालबिसतन्तुभिर्धृतिः प्राणधारणं येन सः। विहितमृणालप्राणधारण|इति यावत्। शिखण्डीव मयूर इव। घना निबिडा या प्रीतिः स्नेहस्तस्या उन्मुख उत्सुकः। गाढप्रणयीति यावत्। मयूरश्च घनेषु मेघेषु या प्रीतिः प्रणयस्तस्यामुन्मुखः सोत्कः। पयोधरप्रणयप्रवणः। मलयानिल इव मलयाचलपवन इव सार्द्रं च तत् चन्दनं च सरसचन्दनं तेन धवला चासौ तनुरेव शरीरमेव लता चेति सरसचन्दनधवलतनुलता—आर्द्रचन्दनश्वेतशरीरवल्ली, आहितो जनितः सरसचन्दनधवलतनुलताया उत्कम्पो वेपथुर्यस्य स तथोक्तः। जनितार्द्रचन्दनश्वेतशरीरवल्लीवेपथुरिति यावत्। मलयानिलोऽपि। आहितो जनितः सरसान् सार्द्रान् चन्दनान् धवान् वृक्षविशेषान् लाति गृह्णातीति तादृश्यस्तन्व्यः कृशा लता वल्लयस्तासामुत्कम्प आन्दोलनं येन सः। समुत्पादिताद्रचन्दनवृक्षविशेषग्राहिकृशवल्लीसमान्दोलन इति यावत्। कृतो विहितः करैः किरणैर्हस्तैश्च कचग्रहः केशाकर्षणं येन स तेन तथाक्तेन। विहितकिरणकेशाकर्षणेनेति यावत्। ग्रहपतिना चन्द्रेण कृष्यमाण इवाकृष्यमाण इव। अन्योऽपि कराभ्यां केशान् गृहीत्वैवाकृष्यत इति समुचितं वर्णितम्। अत्रोत्प्रेक्षालङ्कारः।

कथाभट्टीया

हंसकी तरह मृणाल को धारण करने वाले, मेघों से प्रेम करने वाले मयूर की तरह अतिप्रीति में उत्कण्ठित, सरसचन्दन के वृक्ष तथा लताओं को कम्पित करने वाले मलयपवन की तरह सरस चन्दन से श्वेत शरीर के कम्प से युक्त, किरणरूपी हाथों से केशों को ग्रहण करने वाले चन्द्रमा से ही मानों आकृष्ट हुवा, कामदेव के

प्रेर्यमाण इव कन्दर्पोद्दीपनदक्षेण दक्षिणानिलेन, उह्यमान इवोत्कलिकाबहलेन रतिरसेन, परिमलसम्पातिना मधुपपटलेन पटेनेव नीलेनाच्छादिताङ्गयष्टिः, अन्तःस्फुरता मत्तमदनकरिकर्णशङ्खायमानेन प्रतिमेन्दुना प्रथमसमागमविलासविलक्षस्मितेनेव धवलीक्रियमाणैककपोलोदरो मालतीद्वितीयो दधीचः । आगत्य च हृदयगतदयिता-

जयश्रीः

कन्दर्पस्य कामस्योद्दीपने समुद्दीपने दक्षश्चतुरस्तेन तथोक्तेन । कामाद्दीपनविदग्धेनेति यावत् । दक्षिणानिलेन मलयानिलेन प्रेर्यमाण इव नोद्यमान इव । मरुतः समुचितमेतत्कर्म । उत्कलिका समुत्कण्ठा बहुला समधिका यस्मिन्स तेन तथोक्तेन । समुत्कण्ठाधिकेनेति यावत् । रतिरसेन सम्भोगकामनया । उह्यमान इव धार्यमाण इव । जलमपि बहुलैरूर्मिभिर्धार्यत एव वस्तुजातम् । परिमलसम्पातिना गन्धानुगामिना मधुपपटलेन भ्रमरनिवहेन । नीलेन नीलवर्णेन पटेनेव वसनेनेव । आच्छादिता समावृताङ्गयष्टिः शरीरं येन स तथोक्तः । समावृतशरीर इति यावत् । अन्तः कपोलान्तः स्फुरता प्रकाशमानेन । मत्तः प्रमत्तो यो मदनः काम एव करी हस्ती तस्य कर्णयोः श्रोत्रयोः शङ्ख इव कम्बुरिवाचरन् तेन तथोक्तेन । प्रमत्तकामहस्तिश्रोत्रकम्बुमिवाचरतेति यावत् । प्रतिमेन्दुना प्रतिबिम्बितचन्द्रेण । प्रथमश्चासौ समागमश्च प्रथमसमागमः आद्यसङ्गस्तस्मिन् यो विलासो लीला तेन विलक्षं विस्मययुक्तं स्मितं मन्दहासो यस्य स तथोक्तः । आद्यसङ्गकेलिविस्मयान्वितमन्दोपहासेनेति यावत् । इवात्रोत्प्रेक्षायाम् । धवलीक्रियमाणं सितीक्रियमाणमेकस्य कपोलस्य गण्डस्थलस्योदरं मध्यं यस्य स तथोक्तः । सितीक्रियमाणैकगण्डपालिमध्य इति यावत् । मालतीद्वितीयो मालतीसहचरो दधीच आजगाम । सरस्वतीनिकट इति शेषः । आगत्य सरस्वतीनिकटे आगम्य । हृदयगता मनोगता या दयिता प्रियतमा तस्या नूपुररवेण पादकटकशब्देन मिश्रा सम्पृक्ता तयेवेत्युत्प्रेक्षा । मनोगतप्रियतमापादवलयनादसम्पृक्तयेति यावत् ।

कथाभट्टीया

उद्दीपन में चतुर दक्षिण दिशा की वायु से ही मानों प्रेरित हुआ, उत्कण्ठापूर्ण रतिरस से ही मानों धारित किया हुआ, गन्ध के अनुगामी भ्रमरसमूह के समान नीलवस्त्र से आच्छादित शरीरवाले, मत्त मदनरूपी हस्ती के कर्णस्थ शङ्ख के समान स्थित

नूपुररवमिश्रयेव हंसगद्गदया गिरा कृतसम्भाषणो यथा मन्मथः समाज्ञापयति, यथा यौवनमुपदिशति, यथानुरागः शिक्षयति, यथा विदग्धताध्यापयति, तथा तामभिरामां रामामरमयत्। उपजात-विस्रम्भा चात्मानमकथयदस्य सरस्वती, तया तु सार्धमेकं दिवस-मिवानयत्संवत्सरमधिकम्।

अथ दैवयोगात्सरस्वती बभार गर्भम्। असूत चानेहसा सर्वल-

जयश्रीः

हंसगद्गदया मरालशब्दवद्गद्गदया। गिरा वाचा। कृतं विहितं सम्भाषणं संवादो येन स कृतसम्भाषणो विहितालापः। यथा मन्मथो मदनः समाज्ञापयति समादिशति। यथा येन प्रकारेण। यौवनं तारुण्यमुपदिशति शिक्षयति। यथानु-रागोऽनुरक्तिः शिक्षयति समुपदिशति। यथा विदग्धता चातुर्यम्। अध्यापयति पाठयति। तथा तेनैव प्रकारेण तामभिरामां सुन्दरीम्। रामां सरस्वतीमरमयद् रमयामास। उपजातो जनितो विस्रम्भो विश्वासो यस्याः सा। जनितविश्वासेति यावत्। सरस्वती देवी चात्मानं स्वमस्याकथयदुवाच। सरस्वती स्ववृत्तान्तमुवा-चेति भावः। तया सरस्वत्या सार्धं सह। अधिकं संवत्सरं वत्सरादप्यधिकम्। एकं दिवसमिवैकं दिनमिव। दधीचोऽनयदतिवाहयामास।

अथेति। अथानन्तरम्। सरस्वती देवी दैवयोगाद् भाग्यसंयोगात्। गर्भं दधार दधौ। अनेहसा कालेन। "कालो दिष्टोऽप्यनेहापि" इत्यमरः। सर्वलक्षणा-

कथाभट्टीया

कपोल में प्रतिबिम्बित चन्द्रमा से प्रथम समागम के विलास के स्मित से ही मानों श्वेत कपोल से युक्त मालती सहित दधीच सरस्वती के निकट प्राप्त हुआ। वहाँ आकर के दधीच ने हृदयस्थित दयिता के नूपुरशब्द से मिश्रित ही मानों स्थित हंस के समान गम्भीर वाणी से संभाषण करके कामदेव की आज्ञा के अनुकूल, यौवन के उपदेश के अनुसार, अनुराग की शिक्षा की रीति से, चातुर्य से युक्त उस सुन्दरी स्त्री को प्रसन्न किया। विश्वास को प्राप्त हुई सरस्वती ने अपना वृत्तान्त सुनाया। दधीच ने सरस्वती के साथ एक वर्ष से भी अधिक समय को एक दिन के समान व्यतीत किया। दैवयोग से सरस्वती ने गर्भ धारण किया। और समय पर सुन्दर व सर्व लक्षणों से युक्त पुत्र को उत्पन्न

क्षणाभिरामं तनयम् । तस्मै च जातमात्रायैव 'सम्यक्सरहस्याः सर्वे वेदाः सर्वाणि च शास्त्राणि सकलाश्च कला मत्प्रसादात्स्वयमाविर्भविष्यन्ति' इति वरमदात् । सद्भर्तृश्लाघया दर्शयितुमिव हृदयेनादाय दधीचं पितामहादेशात्समं सावित्र्या ब्रह्मलोकमारुरोह । गतायां च तस्यां दधीचोऽपि हृदये ह्रादिन्येवाभिहतो भार्गववंशसम्भूतस्य भ्रातुर्ब्राह्मणस्य जायामक्षमालाभिधानां मुनिकन्यकामात्मसूनोः संवर्धनाय

जयश्रीः

भिरामं सर्वसुलक्षणचिह्नितं तनयं पुत्रमसूत समुत्पादयामास । जात एव जातमात्रमुत्पन्नमात्रं तस्मै जातमात्राय समुत्पन्नमात्रायैव तस्मै स्वपुत्राय । सम्यक् सुष्ठुप्रकारेण सरहस्याः सतत्त्वाः सोपनिषदो वा वेदा ऋगादयः । सर्वाणि समग्राणि शास्त्राणि न्यायवेदान्तादीनि । सकलाः सर्वाश्च कला वात्स्यायनोक्ताः । मत्प्रसादात् ममानुग्रहात् । स्वयमेवाविर्भविष्यन्ति प्रकाशमेष्यन्ति । इति वरमदात्प्रददौ । सरस्वतीति शेषः । सँश्चासौ भर्ता च सद्भर्ता तस्य श्लाघा तया सद्भर्तृश्लाघया श्रेष्ठपतिप्रशंसया । दधीचं कुमारं दर्शयितुमिव विलोकयितुमिव । ब्रह्मणे इति शेषः । हृदयेन मनसा । आदाय गृहीत्वा । पितामहादेशात् ब्रह्मणो निर्देशात् । सावित्र्या समं सार्धं ब्रह्मलोकं सत्यलोकमारुरोह गतवती । सरस्वत्या भूलोकनिवासो हि पुत्रमुखदर्शनावधिको ऽभूदेति जाते पुत्रे सा शापान्तं कृत्वा ब्रह्मलोकं जगामेति तात्पर्यम् । तस्यां सरस्वत्यां गतायां सत्यां दधीचोऽपि सरस्वतीपतिरपि । हृदये मानसे ह्रादिन्येव वज्रेणेव । "ह्रादिनी वज्रमस्त्री" इत्यमरः । अत्रोत्प्रेक्षा । अभिहतो विहिताघातः । भृगोरयं भार्गवः स चासौ वंशश्च भार्गववंशस्तस्मिन् सम्भूतः समुत्पन्नस्तस्य भार्गववंशसमुद्भूतस्य भार्गवगोत्रसमुत्पन्नस्य । भ्रातुर्ब्राह्मणस्य भार्गवसगोत्रब्राह्मणस्य । अक्षमालाभिधानामक्षमालाख्यां जायां पुत्रीं मुनिकन्यकां मुनिपुत्रीम् । आत्मसूनोर्दधीचपुत्रस्य सारस्वतस्य संव-

कथाभट्टीया

किया । उत्पन्न होते ही अपने पुत्र को "सरहस्य सब वेद सब शास्त्र और सब कलायें मेरी कृपा से तेरे में आविर्भूत हो जावेगी" यह वरदान दिया । सद्भर्ता की प्रशंसा के लिये ही मानों हृदय में दधीच को स्थापित करके ब्रह्मा की आज्ञा से सावित्री के साथ सरस्वती ब्रह्मलोक में चली गई । सरस्वती के चले जाने

नियुज्य विरहातुरस्तपसे वनमगात् । यस्मिन्नेवावसरे सरस्वत्यसूत तनयं तस्मिन्नेवाक्षमालापि सुतं प्रसूतवती । तौ तु सा निर्विशेषं सामान्यस्तन्या शनैः शनैः शिशू समवर्धयत् । एकस्तयोः सारस्वताख्य एवाभवत्, द्वितीयोऽपि वत्सनामाभवत् । आसीच्च तयोः सोदर्ययोरिव स्पृहणीया प्रीतिः ।

अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्या-

जयश्रीः

र्धनाय पोषणाय । नियुज्याधिकृत्य । विरहेण वियोगेनातुरो व्याकुलः । तपसे तपश्चर्यायै । वनं काननमगात् जगाम । यस्मिन्नेवावसरे यस्मिन्समये सरस्वती शारदा तनयं सारस्वतेयमसूत प्रसूतवती तस्मिन्नेव समयेऽनेहसि । अक्षमालापि दधीचभ्रातृजायापि सुतं पुत्रं प्रसूतवती सुषुवे । साक्षमाला तु तौ शिशू बालकौ । निर्गतो विशेषोऽतिशयो यस्मिन् कर्मणि तत् निर्विशेषं स्वपुत्रादभिन्नभावम् । सामान्यं साधारणं स्तन्यं दुग्धं यस्याः सा सामान्यस्तन्याभयसाधारणदुग्धा । शनैः शनैः समवर्धयत् पालयामास । तयोर्मध्ये एकः सुतः सारस्वताख्यः सरस्वतीप्रभवत्वादिति शेषः । एवाभवत् बभूव । द्वितीयोऽक्षमालासमुत्पन्नो वत्सनामा वत्साख्यो बभूव । तयोः सारस्वतवत्सयोः । सोदर्ययोरिव सहोदरयोरिव । स्पृहणीया मनोरमा सर्वैर्वाञ्छनीया प्रीतिः प्रेमाभवत् ।

अथेति—अथानन्तरम् । सारस्वतो मातुः सरस्वत्या महिम्नातिशयेन यौवनारम्भ एव तारुण्यप्रारम्भ एव । आविर्भूतः समुत्पन्नोऽशेषाणां समग्राणां विद्यानां सम्भारः समूहो येन स तादृशः । समुद्भूतसमग्रविद्यासमूहः सन् इति यावत् ।

कथाभट्टीया

पर दधीच भी वज्र से आहत हुए पुरुष के समान खिन्न होकर भार्गव वंशीय अपने भाई की स्त्री ( भौजाई ) अक्षमाला नामक मुनिकन्या को अपने पुत्र के पालन पोषण के लिये नियुक्त करके वियोग से व्याकुल होकर तपस्या के लिये चला गया । जिस दिन सरस्वती ने पुत्र उत्पन्न किया था उसी समय अक्षमाला ने भी पुत्र को उत्पन्न किया । अक्षमाला ने उन दोनों बालकों का पुत्र के समान पालन किया । उनमें एक का सारस्वत और दूसरे का नाम वत्स था । उन दोनो में सहोदर भाइयों के समान स्पृहणीय प्रीति थी । इसके अनन्तर माता

सम्भारस्तस्मिन्सवयसि भ्रातरि प्रेयसि प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास । चकार च कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम् । आत्मनाप्याषाढी, कृष्णाजिनी, वल्कली, अक्षवलयी, मेखली, जटी च भूत्वा तपस्यतो जनयितुरेव जगामान्तिकम् ।

जयश्रीः

तस्मिन् वत्साख्ये । समानं वयोऽवस्था यस्य स तस्मिन् सवयसि समानायुषि । "ज्योतिर्जनपद:" इति समानस्य सः । "वयस्यः स्निग्धः सवयाः" इत्यमरः । भ्रातरि प्रेयसि प्रियतमे । प्राणसमे प्राणतुल्ये । सुहृदि मित्रे । "अथ मित्रं सखा सुहृत्" इत्यमरः । वत्साख्ये । समस्तमेव सम्पूर्णमेव । वाक्प्रभुता यत्र तत् वाङ्मयं शास्त्रं संचारयामास समक्रामयत् । अध्यापयामासेत्यर्थः । कृतो विहितो दाराणां परिग्रहो ग्रहणं येन स तस्य कृतदारपरिग्रहस्य विहितविवाहस्य । अस्य वत्सस्य । तस्मिन्नेव प्रदेशे शोणपरिसरे प्रीत्या प्रेम्णा प्रीतिकूटनामानं प्रीतिकूटाख्यं ग्रामं ( अधुना शाहबादप्रान्तेऽयं ग्रामोऽस्ति ) निवासं वासस्थानं चकार कृतवान् । आत्मनापि स्वयमपि । आषाढः पालाशो दण्डस्तद्वान् । पालाशदण्डधारी । "पालाशो दण्ड आषाढो व्रते" इत्यमरः । कृष्णाजिनं कृष्णचर्मास्यास्तीति कृष्णाजिनी कृष्णचर्मधारी । "अजिनं चर्म कृत्तिः स्त्री" इत्यमरः । वल्कली वृक्षत्वग्धारी ; अक्षवलयमस्यास्तीत्यक्षवलयी रुद्राक्षमालाधारी । मेखलास्यास्तीति मेखली मुञ्जनिर्मितरशनाधारी । रूक्षाः संहताश्च केशा जटा आस्यास्तीति जटी जटाधारी । "ऐणेयमजिनं ब्राह्मणस्य, मौञ्जी रशना ब्राह्मणस्य, पालाशो ब्राह्मणस्य दण्डः" इत्यादि ब्राह्मणकृते पारस्करगृह्यसूत्रे निरूपितम् ( २ काण्डे ५ कण्डिका ) । भूत्वा तपस्यतस्तपश्चरतो जनयितुरुत्पादकस्यैव पितुरन्तिकं समीपं जगाम । तपश्चरितुमना इति शेषः ।

कथाभट्टीया

की महिमा से बाल्य काल में ही सब विद्याओं के ज्ञाता सारस्वत ने प्राणसम मित्र अपने उस वत्सनामक भ्राता को सब विद्यायें पढ़ा दीं । इस भाई के विवाह के अनन्तर इसी प्रदेश के प्रीतिकूट नामक ग्राम ( शाहबाद प्रान्त ) में इसका निवास स्थान स्थापित किया । स्वयं सारस्वत ने पलाशदण्ड, कृष्ण मृगचर्म,

अथ तस्मात्प्रवर्धमानादिपुरुषजनितात्मचरणोन्नतिनिर्गतप्रघोषः, परमेश्वरशिरोधृतः, सकलकलागमगम्भीरः, महामुनिमान्यो विपक्ष-

जयश्रीः

अधुना कविः स्वीयगोत्रप्रवर्तकवत्सान्वयपरम्परामाचष्टे—'अथ' इत्यादिना। अथेत्यादौ प्रावर्तत विपुलो वंश इति सम्बन्धयोजना। अथानन्तरम्। तस्माद्वत्सात्। प्रवर्धमानाः सन्तानादिना वृद्धिं गच्छन्तो ये आदिपुरुषा पूर्वबान्धवाः शुक्रादयस्तैः जनिता विहिता या स्वेषां चरणानां कठादिशाखाध्यायिनामुन्नतिरुत्कर्षस्तया निर्गतो दिगन्तं प्रतिधावितः प्रघोषो यशोध्वनिर्यस्य स तथोक्तः। समेधमानादिपुरुषशुक्रादिसमुत्पादितस्वशाखाध्यायिसमुत्कर्षनिःसृतकीर्तिशब्द इति यावत्। भगीरथप्रवाहपक्षे तु प्रवर्धमानो वामनावतारे वृद्धिं गच्छन् य आदिपुरुषो विष्णुस्तेन जनिता कृतात्मनः स्वस्य चरणस्य बलिच्छलनकाले तृतीयपादस्योन्नतिरूर्ध्वगतिस्तया निर्गतो निष्क्रान्तः प्रघोषः कलकलध्वनिर्यस्य स तथोक्तः। समेधमानविष्णुकृतस्वपादोर्ध्वगतिनिष्क्रान्तकलकलगङ्गाध्वनिरिति यावत्। वामनावतारे वृद्धिं गच्छतो विष्णोः पादो ब्रह्मणा कमण्डलुजलेन प्रक्षालितः। तत्प्रक्षालनजलमेव गङ्गा समभवदिति पुराणकथा। परमेश्वरः सम्राट् तेन शिरसा मूर्ध्ना धृतो गृहीतः। राजमूर्धगृहीत इति यावत्। अन्यत्र परमेश्वरो हरस्तेन शिरसा धृतो गृहीतः। हरशिरोगृहीत इति यावत्। सकलाः सर्वाश्च ताः कलाश्च सकलकलास्तेषामागमनेनायातेन गम्भीरो गहनः। समग्रविद्याप्राप्तिगहन इति यावत्। अन्यत्र तु कलकलेन सहितः सकलकलः स चासावागमश्च तेन गम्भीरो गहनः। सकोलाहलागमनगभीर इति यावत्। महामुनीनां महर्षीणां मान्यो माननीयः। महर्षिमाननीय इति यावत्। अन्यत्र महामुनिर्जह्नुर्मान्यः मानार्हो यस्य सः। जह्नुमानार्ह इति यावत्। विपक्षाणां शत्रूणां क्षोभे भये क्षमः योग्यः। शत्रुभ-

कथाभङ्गीया

वल्कल, अक्षमाला और जटाओं को धारण करके तपस्या करने वाले पिता दधीच के निकट गमन किया। अनेक पूर्वपुरुषों के वेदाध्ययन की ध्वनि से युक्त, चक्रवर्ति राजाओं से सेवित, सब विद्या वा कलाओं का ज्ञाता, महामुनियों से माननीय, शत्रुओं के भय करने में समर्थ, भूतल में प्रतापी, सदाचरण से प्रवृत्त, गंगा के प्रवाह के समान उस वत्समुनि से वात्स्यायन नाम का बहुत बड़ा वंश

**क्षोभक्षमः, क्षितितललब्धायतिः, अस्खलितप्रवृत्तो भागीरथीप्रवाह इ-व पावनः प्रावर्तत विपुलो वंशः । यस्मादजायन्त वात्स्यायना नाम गृहमुनयः, आश्रितश्रौता अप्यनालम्बितालीकबककाकवः, कृतकुक्कु-**

जयश्रीः

यङ्कर इति यावत् । भागीरथीप्रवाहपक्षे विपक्षाणां विगतपक्षाणां पर्वतानां क्षोभे विदारणे क्षमो योग्यः । पर्वतविदारणार्ह इति यावत् । क्षितितले भूतले लब्धा समधिगता आयतिः प्रतापो येन सः । भूतलप्राप्तप्रताप इति यावत् । अन्यत्र क्षितितले भूतले लब्धा प्राप्ता आयतिर्विस्तारो येन सः । भूतलप्राप्तविस्तार इति यावत् । अस्खलितं स्वाचारच्युतिं विना प्रवृत्तः प्रवृत्तः । अनवच्छिन्नप्रचार इति यावत् । अन्यत्र अस्खलितमसंरुद्धं प्रवृत्तः गतः । असंरुद्धनिर्गम इति यावत् । भागीरथीप्रवाह इव गङ्गाप्रवाह इव । पावनः पवित्रः । विपुलो महान् । वंशोऽन्ववायः प्रावर्त्तत प्रवृत्ते । यस्माद्वंशात् वात्स्यायनान्नाम गृहमुनयो वात्स्यायना वत्सगोत्रतया प्रथिताः । गृहमुनयो गेहस्थिता मुनयः । आश्रितं गृहीतं श्रौतं श्रुतिभवं चिरवृत्तं कर्म परम्पराप्राप्तमितिवृत्तं वा यैस्ते तादृशाः । गृहीतकर्णाकर्णिकसमायातवृत्तान्ता अपीति । न आलम्बितं न समाश्रितमलीकं मिथ्या बककाकुश्च बककुच्छद्म च यैस्ते तादृशाः । अनाश्रितासत्यवक्रवाक्याम इति यावत् । "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इत्यादिनोक्तलक्षणेन काकुशब्देनात्र छद्म गृह्यते । ये हि कर्णाकर्णिश्रुतं चिरवृत्तमाश्रितवन्तस्तेऽवश्यं कृत्रिमवाक्यं गाहाय-यन्ते । अमी मुनयो वात्स्यायनास्तु न तथेति विशेषः । तत्त्वाश्रितम्—आश्रित

कथाभट्टीया

प्रवृत्त हुआ । गंगा के पक्ष में यह अर्थ है—आदि पुरुष नारायण के चरण से उत्पन्न, शिव के मस्तक पर शोभित, कलकल ध्वनि से युक्त, जह्नुमुनि के माननीय, पर्वत भेदन में समर्थ, भूमि पर विस्तृत, समुद्र तक बहने वाला, गंगा प्रवाह है । प्रत्येक शब्द गंगाप्रवाह और वत्सवंश इन दोनों शब्दों का विशेषण है अतः यहाँ शब्द साम्य से उपमा है । इस वात्स्यायन वंश में वत्सगोत्रीय बहुत से विशिष्ट ब्राह्मण हुए । जो गृह में ही मुनियों के समान आचरण करते थे । किंवदन्ती को सुनते थे तथापि कपट या असत्य का आश्रय नहीं लेते थे । जो किंवदन्ती को सुनते हैं वे असत्य वचन सुनते हैं यह विशेष

टव्रता अप्रवडालवृत्तयः, विवर्जितजनपङ्क्तयः, परिहृतकपटकीर-कुचीकूर्चाकूताः, अगृहीतगह्वराः, न्यक्कृतनिकृतयः, प्रसन्नप्रकृतयः, विगतविकृतयः, परपरिवादपराचीनचेतसः, वर्णत्रयव्यावृत्तिविशुद्धा-न्धसः, धीरधिषणावधूतान्येषणाः, अनङ्कुरुस्वभावाः, प्रणतप्रणयिनः,

जयश्रीः

गृहीतं श्रौतं वेदोक्तं कर्म यैस्ते तथोक्ताः । गृहीतवेदोक्तकर्माण इति यावत् । तथा अनाश्रितास्त्यदम्भाश्च कृतं विहितं कुक्कुटानां ताम्रचूडानां व्रतं भक्षणं यैस्ते कृत-कुक्कुटव्रता अपि । नास्ति वैडालो मार्जारी वृत्तिर्हिंसात्मिका येषां ते तादृशाः । अहिंसाशीला इति यावत् । ये हि कुक्कुटभक्षणं कुर्वते ते कथं न हिंसाशीला इति विरोधः । तत्परिहारस्त्वयम्—कृतं विहितं कुक्कुटव्रतं धर्मशास्त्रीयनियमविशेषो यैस्ते तादृशाः । विहितकुक्कुटाण्डप्रमाणग्रासभोजना इति यावत् । यत्र कुक्कुटा-ण्डप्रमाणैर्ग्रासैर्भुज्यते तद्व्रताचारिणः । विवर्जिता त्यक्ता जनानां साधारणजनानां पङ्क्तिभोजनव्यवहारो यैस्ते । यद्वा पङ्क्तिः पाकः । "कृदभिहितो भावो द्रव्यव-त्प्रकाशते" इति न्यायात् । त्यक्तपङ्क्तिभोजना इति यावत् । कपटं च दम्भश्च, कीरकुची च शुकवन्निरर्थकवचश्च, कूर्चं च केशपक्षश्चेति कपटकीरकुचीकूर्चानि, प-रिहृतं त्यक्तं कपटकीरकुचीकूर्चेषु आकूतमभिप्रायो यैस्ते तादृशा । त्यक्तदम्भशुकवा-णीकेशसञ्चयाभिप्राया इति यावत् । "कपटोऽस्त्री व्याजदम्भोपधयः" इत्यमरः । "कूर्चमस्त्री भ्रुवोर्मध्यम्" इत्यमरः । अगृहीतं नोपात्तं गह्वरं पापं यैस्ते तादृशाः । अनुपात्तपापा इति यावत् । न्यक्कृता दूरीकृता निकृतिः शाठ्यं यैस्ते तादृशाः । परिहृतकैतवा इति यावत् । प्रसन्ना निर्मला प्रकृतिः स्वभावो येषां ते तथोक्ताः । निर्मलशीला इति यावत् । विगता दूरीभूता विकृतिर्मनोमालिन्यं येषां ते तादृ-शाः । परेषामन्येषां परिवादे निन्दायां पराचीनं पराङ्मुखं चेतो मानसं येषां ते तथोक्ताः । परनिन्दापराङ्मुखमनस इति यावत् । वर्णत्रयाणां क्षत्रियविट्शूद्राणां व्यावृत्त्या निवृत्त्या विशुद्धं पूतमन्धोऽन्नं येषां ते तथोक्ताः । ब्राह्मणेतरत्रैवर्णिक-निवृत्तिपूताशना इति यावत् । "भिस्सा स्त्री भक्तमन्धोऽन्नम्" इत्यमरः । धीरा

कथामहीया

हुआ । परिहारपक्ष में श्रौत पद का वेदों के पढ़ने वाले यह अर्थ है । जो कुक्कुट का भक्षण करते हैं तो भी हिंसा नहीं करते यह विरुद्ध अर्थ है । इसके

**शमितसमस्तशाखान्तरसंशीतयः, उद्घाटितसमग्रग्रन्थार्थग्रन्थयः, क-वयः, वाग्मिनः, विमत्सराः, स्वरसभाषितव्यसनिनः, विदग्धपरिहा-सवेदिनः, परिचयपेशलाः, नृत्यगीतवादित्रेष्वबाह्याः, ऐतिह्यस्यावित-**

जयश्रीः

चासौ धिषणा चेति धीरधिषणा गभीरमतिस्तयावधूता तिरस्कृताऽन्वेषणा याच्ञा यैस्ते तथोक्ताः। गभीरमतितिरस्कृतयाच्ञा इति यावत्। नास्ति सङ्कुसुकोऽस्थिरः स्वभावो येषां ते असङ्कुसुकस्वभावाः निश्चलशीला इति "सङ्कुसुकोऽस्थिरः" इत्यमरः। प्रणतेषु नतेषु प्रणयः स्नेहो येषां सन्तीति यावत्। प्रणतप्रणयिनो भक्तानु-ग्राहिणः। शमिता दूरीकृताः समस्तानां सर्वेषां शाखान्तराणां कलादिशास्त्रान्त-राणां संशीतयः सन्देहा यैस्ते तादृशाः। दूरीकृतसमस्तकलादिशास्त्रान्तरसन्देहा इति यावत्। उद्घाटिता व्याख्याता इत्यर्थः। समग्रग्रन्थानां समस्तशास्त्राणामर्थ-ग्रन्थयोऽर्थदुर्बोधप्रदेशाः कूटार्था वा यैस्ते तादृशाः। व्याख्यातसमस्तशास्त्रार्थदुर्-बोधप्रदेशा इति यावत्। कवयः काव्यकर्तारः। वाग्मिनो वावदूकाः। विगतो मत्सरोऽन्यशुभद्वेषो येषां ते तादृशाः। मत्सररहिता इति यावत्। स्वरसे स्वयु-क्ते भाषिते भाषणे व्यसनिनो स्वयुक्तभाषणशीला इति यावत्। विदग्धानां नाग-रिकाणां ये परिहासास्तान् विदन्तीति तादृशाः। नागरिकोपहासज्ञातार इति यावत्। परिचये संस्तवकरणे पेशला दक्षाः। नृत्यं लास्यं गीतं गायनं वादित्रं वाद्यं च तेष्वबाह्या न बहिर्भूताः। तौर्यत्रिकनिपुणा इति यावत्। इति ह स्म वदन्तीत्यैतिह्यं पुरावृत्तं तस्याविततृष्णा अतृप्ताः। इतिहासश्रवणलोलुपा

कथाभट्टीया

परिहार में कुक्कुट व्रत का चान्द्रायण व्रत करने वाले यह अर्थ है। जो साधारण पुरुषों की पंक्ति में भोजन को नहीं करते हैं। कपट, निरर्थक वचन तथा धन संचय की इच्छा न करने वाले, निष्पापी, धूर्तता से शून्य, प्रसन्न प्रकृति वाले, मनोमालिन्य से रहित, अन्य निन्दा से पराङ्मुख, ब्राह्मण से भिन्न लोगों वर्णों के अन्न के न खाने से पवित्र, धीरबुद्धि से याञ्चा को त्यागने वाले, निश्चल स्वभाव से भूषित, भक्तों के प्रेमी, सब वेद शाखाओं के सन्देहों को शान्त करने वाले, समस्त ग्रन्थों के कूटार्थों की व्याख्या करने वाले, स्वयं कवि, व्याख्यान देने वाले, सरस भाषण करने वाले, नागरिकों को परिहास के ज्ञाता, परिचय करने में चतुर,

तृष्णाः, सानुक्रोशाः, सत्यशुचयः, साधुसम्मताः, सर्वसत्त्वसौहार्दद्रवार्द्रहृदयाः, तथा सर्वगुणोपेता राजसेनानभिभूताः, क्षमाभाज आश्रितनन्दनाः, अनिस्त्रिंशा विद्याधराः, अजडाः कलावन्तः, अदोषा-

जयश्रीः

इति यावत्। अनुक्रोशेन सहिताः सानुक्रोशा सानुग्रहा इति भावः। सत्येन तथ्येन शुचया निर्मलाः सत्यशुचयः सत्यनिर्मलाः। साधूनां शिष्टानां सम्मता इष्टाः। सर्वाणि समस्तानि सत्त्वानि जन्तव इति सर्वसत्त्वानि तेषु सौहार्दं प्रीतिरेव द्रवो रसस्तेनार्द्रं स्निग्धं हृदयं मनो येषां ते तादृशाः। समयप्राणिप्रेमरसस्निग्धमनस इति यावत्। सर्वैः समस्तगुणैः सत्त्वरजस्तमोभिरुपेता युक्ता इति सर्वगुणोपेताः समस्तसत्त्वरजस्तमोयुक्ता इति यावत्। तादृशा अपि। राजसेन रजोगुणात्मकेन भावेनानभिभूता रहिताः। रजोगुणरहिता इति भावः। ये हि सत्त्वादिगुणयुक्तास्ते कथं न रजोऽभिभूता इति विरोधः। अमी तु न तथेति विरोधपरिहारे तु—सर्वगुणैर्दयादाक्षिण्यादिभिरुपेताः सहिताः। तथा राज्ञां सेनयानभिभूता नृपसैन्यानतिक्रान्ता इति यावत्। अत्र सर्वत्र विरोधवाचकस्यापिशब्दस्याभावाद् विरोधालङ्कारो व्यङ्ग्यः। क्षमाभाजो भूलोकसेविनः। तथापि। आश्रितं समालम्बितं नन्दनमिन्द्रोद्यानं यैस्ते तादृशाः। इन्द्रोद्यानाश्रयिण इति यावत्। ये भूलोकनिवासिनस्ते कथंकारमिन्द्रोद्यानसेविनः स्युरिति विरोधः। परिहारे तु क्षमाभाजस्तितिक्षापरायणाः। आश्रितनन्दनाः शरणागतानन्ददायिन इति। अनिस्त्रिंशा खड्गरहिताः। तथापि विद्याधरा यक्षाः। ये हि विद्याधरास्ते सखड्गा इति। मालाखड्गगुलिकाआदिभेदेन भिन्नानामपि तेषां खड्गहस्तत्वमव्यभिचरितमेवेति बोध्यम्। अमी मुनयस्तु खड्गरहितास्तथापि यक्षा इति विरोधः। तत्परिहारे तु—अनिस्त्रिंशा अक्रूराः। विद्याधराः पण्डिताश्च। अजडा अशीताः। तथापि कलावन्तश्चन्द्रमस इति विरोधः। परिहारस्तु अजडा अमूर्खाः कलावन्तो गीतनृत्यादिचतुःषष्टिकलावन्तः इति। अदोषा रात्रिशून्यास्तथापि तारका नक्षत्राणि, इति विरोधः। परिहारे तु

कथाभद्रीया

नृत्य, गीत व वादन के जानने वाले, इतिहास के इच्छुक, सदय, सत्यवादी, साधुसम्मत, सब प्राणियों के प्रेम से आर्द्रहृदय वाले, सब सत्त्वादिगुणों से युक्त

स्तारकाः, अपरोपतापिनो भास्वन्तः, अनुष्माणो हुतभुजः, अकुसृतयो भोगिनः, अस्तम्भाः पुण्यालयाः, अलुप्तक्रतुक्रिया दक्षाः, अव्यालाः, कामजितः, असाधारणा द्विजातयः ।

जयश्रीः

अदोषा दोषशून्याः । तारयन्तीति तारकाः समुद्धारकाः धर्मोपदेशेनेति भावः । न परान् उपतापयन्तीत्यपरोपतापिनः परतापाविधायिनः । तथापि भास्वन्तः सूर्याः । सूर्यस्वरूपा हि परांस्तापयन्ति । अमी तु न तथेति विरोधः । परिहारस्तु—अपरोपतापिनः परानुद्वेजकाः । भास्वन्तस्तेजस्विनः । अनुष्माणः ऊष्म-वर्जिताः । तथापि हुतभुजोऽग्नयः । अग्निरूपा हि सोष्माणो भवन्ति न त्विमे इति विरोधे परिहारस्तु—अनुष्माणोऽगर्वाः । हुतं यज्ञावशिष्टं भुञ्जते इति हुत-भुजो यज्ञशिष्टाशिन इति । नास्ति कौ पृथिवीविसर्पं सृतिर्गमनं येषां ते तादृशा अपि भोगिनः सर्पाः । सर्पा हि पृथ्वीविसर्पं गमनं कुर्वन्ति, अमी तु न तथेति विरोधपरिहारे नास्ति कुसृतिः शाठ्यं येषां ते तादृशास्तथा भोगिनः सुखिनश्च । "कुसृतिर्निकृतिः शाठ्यम्" इत्यमरः । अस्तम्भाः पाषाणस्तम्भरहिताः । तथापि पुण्याः पवित्राः आलया गृहाश्च आलया हि स्तम्भसहिता भवन्ति । अमी तु न तथेति विरोधः । परिहारे अस्तम्भाः स्तब्धतारहिताः । पुण्यालयाः सुकृतिन इति । न लुप्ता न विनष्टा क्रतुक्रिया यज्ञानुष्ठानं येषां तादृशा दक्षाश्च प्रजापतयश्च । दक्षस्य यज्ञविध्वंसो हरेण विहित इति दक्ष एव यज्ञविध्वंसशून्यः कथञ्च स्यादिति विरोधे परिहारः—न लुप्ता क्रतुक्रिया यज्ञानुष्ठानं येषां तथाभूताः, दक्षा निपुणाश्चेति । अव्यालाः सर्परहिताः । तथापि कामं जयन्तीति कामजितः शङ्कराः । शङ्कररूपा हि व्यालशोभिनोऽवश्यं जायन्त इति विरोधे परिहारः—

कथाभद्रीया

तथापि रजोगुण से शून्य यह विरुद्ध अर्थ है इसके परिहार में सब दयादिगुणों से युक्त तथा राजाओं की सेना के आक्रमण से शून्य, यह अर्थ है । भूमी पर रहते हुवे भी इन्द्र के नन्दन वन में रहने वाले यह विरोध है । परिहार में क्षमा शील तथा शरणागतों को आनन्दित करने वाले । यशस्कर होते हुवे भी खड्ग को नहीं धारण करने वाले यह विरोध है । परिहार में "मूर्खता से शून्य तथा पण्डित" यह अर्थ है । उष्ण होते हुवे भी चन्द्रमा के सदृश है । परिहार

तेषु चैवमुत्पद्यमानेषु, संसरति संसारे, यात्सु युगेषु, अवतीर्णे कलौ, वहत्सु वत्सरेषु, व्रजत्सु वासरेषु, अतिक्रामति च काले प्रसवपरम्पराभिरनवरतमापतति विकाशिनि वात्स्यायनकुले, क्रमेण कुबेरनामा वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे । तस्याभवन्नच्युत ईशानो हरः पाशुपतश्चेति चत्वारो युगारम्भा इव ब्राह्मतेजोजन्य-

जयश्रीः

अव्याला अहिंस्राः । कामजितः कामजयिनो निरभिलाषा वा । न साधारणा असाधारणा असामान्याः । तथापि द्वे जाते येषां ते तादृशाः । ये हि जातिद्वयभृतस्ते कथमसाधारणा भवन्तीति विरोधे असाधारणा विशिष्टाः । द्विजातयो विप्रा इति कृत्वा परिहारः । द्विजातीनां हि मातृजठरे एकं जन्म, आचार्यसमीपे उपनयनात् वेदाधिगमो द्वितीयं जन्मेति जन्मद्वयम् । "मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने" इति स्मृतेः ।

तेष्विति । एवमनेन प्रकारेण तेषु वात्स्यायनवंशीयेषु उत्पद्यमानेषु जायमानेषु सत्सु । संसारे जगत्यां संसरति सति प्रवाहरूपेण गच्छति सति । युगेषु सत्यत्रेताद्वापरकलियुगादिषु बहुषु यात्सु सत्सु गच्छत्सु सत्सु । कलौ कलियुगे । अवतीर्णेऽवरूढे । आगत इति यावत् । वत्सरेषु वर्षेषु । वहत्सु गच्छत्सु सत्सु । वासरेषु दिवसेषु व्रजत्सु यात्सु सत्सु । काले समये । पूर्वोक्ते । अतिक्रामति व्यतति सति । प्रसवानां परम्परास्ताभिः सन्तानप्रवाहैः । अनवरतमजस्रम् । विकाशिनि प्रसरणशीले वात्स्यायनकुले वात्स्यायनवंशे । आपतति सत्यवतरति सति । क्रमेण क्रमशः । गुरुपक्षपाती गुरुमतावलम्बी । गुरुभक्त इति यावत् । कुबेरनामा कुबेराख्यो द्विजो विप्रः । वैनतेय इव विनतापुत्रो गरुड इव । जन्म लेभे जननं प्राप । उत्पेदे इति भावः । गरुडोऽपि गुरुभिर्महद्भिः पक्षैश्च पतति यातीति गुरुपक्षपाती द्विजः पक्षी चेति ज्ञेयम् । तस्य कुबेरस्य । अच्युत ईशानो हरः पाशुपतश्चेति चत्वारः पुत्रास्तनया अभवन् बभूवुः । कीदृशास्ते युगारम्भा इव युगप्रारम्भा इव । ब्रह्म वेदस्तस्येदं ब्राह्मं वैदिकं यत्तेज ओजस्तेन जन्यमानः

कथाभट्टीया

पक्ष में "पण्डित तथा कलाओं के ज्ञाता" अर्थ है । रात्रिशून्य तथा नक्षत्र रूप है । परिहार में दोषशून्य तथा धर्मोपदेश से उद्धार करने वाले अर्थ है । वे सूर्यरूप होते हुवे भी ताप कारक नहीं है । परिहार में "तापकारक नहीं तथा

स्मीः ऽर्थपतिरिति नाम्ना समग्राग्रजन्मचक्रचूडामणिर्महात्मा सूनुः। सोऽजनयद्भृगुं हंसं शुचिं कविं महीदत्तं धर्मं जातवेदसं चित्रभानुं त्र्यक्षमहिदत्तं विश्वरूपं चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान्पवित्रान्पुत्रान्। अलभत च चित्रभानुस्तेषां मध्ये राजदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम्। स बाल एव विधेर्बलवतो वशा-

जयश्रीः

गहनश्च। पुनः कीदृशः—समग्राः सर्वे येऽग्रजन्मानोऽग्रजास्तेषां चक्रं व्रातं तस्य चूडामणिः शिरोमणिः। महात्मा महानुभावः। अर्थपतिनामा तनयो बभूव। सोऽर्थपतिरेकादश (१)रुद्रानिव सोमस्य सोमलताया योऽमृतरसस्तस्य शीकरैर्बिन्दुभिश्छुरितानि व्याप्तानि मुखानि येषां ते तान् तथोक्तान्। सोमलतासुधाद्रवव्याप्तवदनान् इति यावत्। पवित्रान् पावनान्। भृगुं हंसं शुचिं कविं महिदत्तं धर्मं जातवेदसं चित्रभानुं त्र्यक्षमहीदत्तं विश्वरूपं चेत्येकादश पुत्रान् अजनयत् समुत्पादयामास। रुद्रा अपि—सोमस्य,शिरस्थचन्द्रस्यामृतरसेन सुधाद्रवेण छुरितमुखा व्याप्तवदना भवन्ति। तेषामेकादशानां मध्ये चित्रभानुश्चित्रभानुनामार्थपतितनयः। राजदेवी अभिधानं यस्याः सा तस्यां राजदेवीनामिकायां ब्राह्मण्यां विप्रायां बाणं बाणभट्टाख्यमात्मजं तनयमयलभत प्राप्त। स बाणो हर्षचरितकर्ता। बाल एव शिशुरेव बलवतोऽनतिक्रमणीयस्य। विधेदवस्य। वशादधीनात्।

कथाभट्टीया

के व्यतीत होने पर, कलियुग के अनेक वर्ष तथा दिनों के अनन्तर बहुत समय के व्यतीत होने पर अनेक पुरुषों के प्रसव से वात्स्यायन कुल के विस्तृत होने पर इस वंश में क्रम से गुरुभक्त कुबेर नामक पुरुष गुरुपक्षों से युक्त वैनतेय ( गरुड़ ) के समान उत्पन्न हुआ। इस कुबेर के अच्युत, ईशान, हर, और पाशुपत नामक चार पुत्र चार युगों के तथा नारायण के चार भुजाओं के समान

---

(१) "यदरुदत्तद्रुद्रस्य रुद्रत्वम्" इति काठके रुद्रनिर्वचनम्। "मन्युः, मनुः, महेशानः, महान्, शिवः, ऋतुध्वजः, उग्ररेताः, भवः, कालः, वामदेवः, धृतव्रतः," एतानि रुद्रनामानि। "धीः वृत्तिः, उशना, उमा, नियुत्, सर्पिः, इला, अम्बिका, इरावती, सुधा, दीक्षा" इतिरुद्राणीनामानि (भागवते ३।१२।१२-१३)।

दुपसम्पन्नया व्ययुज्यत जनन्या। जातस्नेहस्तु नितरां पितैवास्य मातृतामकरोत्। अवर्धत च तेनाधिकतरमाधीयमानधृतिर्धाम्नि निजे। कृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चतुर्दशवर्षदेशीयस्य

जयश्रीः

उपसम्पन्नया मृतया। "वाच्यलिङ्गाः प्रमीतोपसम्पन्नप्रोक्षिता हताः" इत्यमरः। जनन्या मात्रा व्ययुज्यत वियुयुजे। जातः समुत्पन्नः स्नेहः प्रणयो यस्य सः। समुत्पन्नप्रीतिः। अस्य बाणस्य पितैव जनक एव चित्रभानुनामा। नितरां सुतराम्। मातृतां जननीत्वमकरोत् व्यधात्। तेन पितृस्नेहेन। आधीयमाना धार्यमाणा धृतिर्धैर्यं यस्यासौ। धूयमानेति पाठे तु—"धूपः कार्ष्ण्ये नद्धपायमाणोद्दीप्यमाना" इत्यर्थो ज्ञेयः। एतादृशो बाणः। निजे स्वकीये धाम्नि इति यावत्। धाम्नि गेहे। "धाम रश्मौ प्रभावे च तेजोमन्दिरजन्मसु" इति विश्वः।

कृतेति। कृतो विहित उपनयनादिसंस्कारोपनयनादिक्रियाकलापः कर्मनिवहो यस्य स तस्य तादृशस्य। विहितमौञ्जीबन्धनादिसंस्कारस्येति यावत्। "अष्टवर्षं ब्राह्मणमुपनयेद्, गर्भाष्टमे वा, एकादशवर्षं राजन्यम्, द्वादशवर्षं वैश्यम्, यथामङ्गलं वा सर्वेषाम्" (पारस्करगृह्यसूत्र २ कण्डिका १-५)। "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इति श्रुतिः। इत्युपनयनप्रक्रियापद्धतिः गृह्यसूत्रेषु द्रष्टव्या। ब्रह्मवर्चसकामस्य पञ्चमे वर्षे उपनयनं विधीयते इति बाणभट्टस्य पञ्चमे वर्षे एवोपनयनसंस्कारोऽभवत्। अत एव चतुर्दशवर्षीयस्य समावर्तनाख्यसंस्कारवर्णनं घटते। ब्रह्मवर्चसकामस्य पञ्चमवर्षे उपनयनं मनुना विहितम्—

"ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे"॥ इति (२ अ० ३७ श्लो०)।

समावृत्तस्य कृतसमावर्तनाख्यसंस्कारस्य। पारस्करगृह्यसूत्रे २ अध्याये ६-८

कथाभट्टीया

उत्पन्न हुए। चारों युग ब्रह्मा के प्रभाव से सृष्टि करते हैं और ये वेद के प्रभाव से सृष्टि करते थे। नारायण की चार भुजायें सुदर्शनचक्र और नन्दक खड्ग से शोभित हैं और ये सज्जन समूहों को सुखदायी थे। उनमें से पाशुपत के पर्वतों से अवस्थित भूमि के भार के समान कुल को स्थिर करने वाला तथा समुद्रों के समान गम्भीर सब ब्राह्मणों में श्रेष्ठ अर्थपति नामक पुत्र हुआ। इस अर्थपति के

पितापि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेनादशमीस्थ एवास्तमगात्। संस्थिते च पितरि महता शोकेनाभीलमनुप्राप्तो दिवानिशं दह्यमानहृदयः कथंकथमपि कतिपयान्दिवसानात्मगृह एवानैषीत्। गते च विरलतां शोके शनैः शनैरविनय-

जयश्रीः

कण्डिकासु समावर्त्तनप्रयोगोऽभिहितः। चतुर्दशवर्षदेशीयस्य चतुर्दशवर्षादीषन्न्यूनस्य। "ईषदसमाप्तौ कल्पप् देश्यदेशीयर" इत्यनेन देशीयरप्रत्ययः। अस्य बाणस्य पितापि चित्रभानुरपि। श्रुतिर्वेदः स्मृतिर्धर्मशास्त्रं ताभ्यां विहितं प्रतिपादितम्। द्विजजनानामुचितं विप्रजनयोग्यम्। निखिलं सम्पूर्णं पुण्यजातं संस्कारादिमङ्गलं कृत्वा कालेनानेहसा। अदशमीस्थ एवाल्पायुरेव। 'दशमीस्थः क्षीणरागवृद्धौ" इत्यमरः। अस्तमगात् स्वर्गतः। मृतोऽभवदिति भावः। पितरि जनके संस्थिते मृते सति महता दीर्घेण शोकेन दुःखेन। आभीलं कष्टम्। "स्यात्कष्टं कृच्छ्रमाभीलम्" इत्यमरः। अनुप्राप्तोऽधिगतः। दिवानिशं रात्रिन्दिवम्। दह्यमानं हृदयं यस्य स दह्यमानहृदयस्तप्यमानमानसः। कथं कथमपि केनापि प्रकारेण। कतिपयान् दिवसान् कतिपयदिनानि। आत्मगृह एव स्वीयगेह एव। अनैषीत् यापयामास। शनैः शनैर्मन्दं मन्दम्। शोके दुःखे विरलतां स्वल्पतां गते प्राप्ते सति।

कथाभट्टीया

एकादश रुद्रों के समान सोमलता के रस का पान करने वाले भृगु, हंस, शुचि, कवि, महीदत्त, धर्म, जातवेदा, चित्रभानु, त्र्यक्ष, अहिदत्त, विश्वरूप, ये एकादश पवित्र पुत्र हुए। इनमें से चित्रभानु ने राजदेवी में बाणभट्ट को उत्पन्न किया। यह बाणभट्ट दुर्दैव से बाल्यकाल में ही माता से वियुक्त हो गया। पिता ने ही स्नेह के कारण माता के समान इसका पोषण किया। इस प्रकार बाणभट्ट पिता के उद्योग से अपने गृह में ही वृद्धि को प्राप्त हुआ। अपने पुत्र बाण का उपनयन समावर्तन आदि वेदोक्त और स्मृति विहित सर्व द्विजजनों के योग्य पवित्र संस्कार करके पिता चित्रभानु भी अल्पावस्था में ही मृत्यु को प्राप्त हो गया। पिता के लोकान्तरित होने पर महाशोक से कष्ट को प्राप्त हुआ जलते हुए हृदय से कुछ दिन बाणभट्ट ने अपने गृह पर ही व्यतीत किये। ततः धीरे २ शोक के न्यून

निदानतया स्वातन्त्र्यस्य, कुतूहलबहुलतया च बालभावस्य, धैर्यप्रतिपक्षतया च यौवनारम्भस्य, शैशवोचितान्यनेकानि चापलान्याचरन्नित्वरो बभूव । अभवंश्चास्य वयसा समानाः सुहृदः सहायाश्च । तथा च । भ्रातरौ पारशवौ चन्द्रसेनमातृषेणौ, भाषाकविरीशानः परं मित्रम्, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारबाणवासबाणौ,

## जयश्रीः

स्वातन्त्र्यस्य स्वाधीनतायाः । अविनयस्यौद्धत्यस्य निदानं कारणं तस्य भावस्तत्ता तयाऽविनयनिदानतयौद्धत्यकारणतया । बालभावस्य शैशवस्य कुतूहलं कौतुकं बहुलं बहुर्यस्मिन् स तस्य भावस्तत्ता तया कौतुकाधिक्यया । यौवनस्य तारुण्यस्यारम्भस्तस्य तथोक्तस्य तारुण्यप्रारम्भस्येति यावत् । धैर्यस्य प्रतिपक्षस्तस्य भावस्तत्ता तया धैर्यप्रतिपक्षतया धीरताविरोधितया च । शैशवस्य बाल्यस्योचितानि योग्यानि । अनेकानि विविधानि । चापलानि चाञ्चल्यानि । आचरन् कुर्वन् । इत्वरो गमनशीलो बभूवाभवत् । अस्य बाणभट्टस्य । वयसायुषा समानास्तुल्याः । सुहृदो मित्राणि । सहायाश्च सहचराश्चाभवन् बभूवुः । तथा च परस्त्रिया अपत्यं पुमान् पारशवः । "परस्त्रीपरशवम्" इति यञ् परशवादेशश्च । भ्रातरौ पारशवौ विप्राच्छूद्रयां जातौ प्रतिलोमजौ पुत्रौ । यथाह याज्ञवल्क्यः—

"विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा" ॥ इति ( १।९१ )

चन्द्रसेनश्च मातृषेणश्च तौ चन्द्रसेनमातृषेणाख्यौ । भाषायां संस्कृतादिवाक्ये कविः काव्यकर्ता । ईशानाख्यो जनः परं मित्रं सुहृद् बभूव । रुद्रश्च नारायणश्च तौ रुद्रनारायणाख्यौ प्रणयिनौ प्रेमाधारावभूताम् । विद्वांसौ पण्डितौ वारबाणवासबा-

## कथाभट्टीया

होने पर वह अविनय मूल स्वातन्त्र्य के कारण बाल्य में अधिक कौतुक से तथा यौवन के प्रारम्भ में धैर्य नहीं रहने से बाल्यावस्था के अनुकूल चापल्य को करता हुआ इधर उधर भ्रमण करने लगा । इसके समान अवस्था वाले मित्र तथा सहायक बहुत से हुए । तथा हि—चन्द्रसेन और मातृषेण ये दोनों इसके भ्राता थे । जो ब्राह्मण से शूद्र स्त्री में उत्पन्न हुए थे । संस्कृत आदि भाषाओं का कवि ईशान इसका परम मित्र था । रुद्र और नारायण इसके प्रेमी थे

वर्णकविर्वेणीभारतः, प्राकृतकृत्कुलपुत्रो वायुविकारः, बन्दिनावनङ्गबाणसूचीबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गलिको मयूरकः, ताम्बूलदायकश्चण्डकः, भिषक्पुत्रो मन्दारकः, पुस्तकवाचकः सुदृष्टिः, कलादश्चामीकरः, हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृद्वीरवर्मा, पुस्तकृत्कुमारदत्तः, मार्दङ्गिको जीमूतः, गायनौ सोभिलग्रहादित्यौ, सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वोपा-

जयश्रीः

णाख्यौ। वर्णकविर्वर्णनाकविर्वेणीभूतः। प्राकृतं करोतीति प्राकृतकृत् प्राकृतभाषाकविः कुलपुत्रः कुलीनः। वायुविकाराख्यः। बन्दिनौ स्तुतिपाठकौ अनङ्गबाणसूचीबाणौ। चक्रवाकिका तदाख्या काचित्स्त्री। कात्यायन्येव कात्यायनिका—अर्धजरती विधवा नारी। "कात्यायन्यर्धवृद्धा या काषायवसनाऽधवा" इत्यमरः।

"पञ्चाशद्वर्षदेशीयां वीरां संस्थितभर्तृकाम्।
वदन्ति कात्यायनिकां धृतकाषायवाससम्" ॥

इति कात्यायनीलक्षणम्। जाङ्गुलिको विषवैद्यो गारुडिकः। "विषवैद्यो जाङ्गुलिकः" इत्यमरः। मयूरकाख्यः। चण्डकाख्यः। भिषक्पुत्रो वैद्यतनयो मन्दारकाख्यः। पुस्तकवाचकः पुस्तकाध्येता सुदृष्टिनामा। कलादः स्वर्णकारः। "नाडिन्धमः स्वर्णकारे कलादो रुक्मकारके" इत्यमरः। चामीकराभिधेयः। सिन्धुषेणाख्यो हैरिको हीरककार्यकर्ता स्वर्णकाराध्यक्षः। लेखकः पुस्तकलिपिकर्ता गोविन्दकनामा। वीरवर्मनामा चित्रकृदालेख्यकर्ता। पुस्तं करोतीति पुस्तकृत् लेप्यादिकर्ता। "पुस्तं लेप्यादिकर्मणि" इत्यमरः। कुमारदत्तनामा। मृदङ्गवादनं कर्मास्येतिमार्दङ्गिको मुरजवादको जीमूतनामा। गायत इति गायनौ सोभिलग्रहादित्याख्यौ। कुरङ्गिका नाम्नी सैरन्ध्री प्रसाधिका। "सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका" इत्यमरः। वांशिकौ वंशवादनदक्षौ मधुकरपारावताभि-

कथाभट्टीया

इसी तरह विद्वान् वारबाण और वासबाण, वर्णन में चतुर वेणी भारत, प्राकृत कवि कुलीन वायुविकार, अनङ्ग बाण और सूची बाण स्तुतिपाठक, चक्रवाकिका नामक विधवा स्त्री, मयूर नामक विषवैद्य, चण्ड तमोली, मन्दारक, वैद्यपुत्र, पुस्तकवाचक सुदृष्टि, चामीकर सुनार, सिन्धुषेण हीरे बेचने वाला, गोविन्द

ध्यायो दर्दुरकः, संवाहिका केरलिका, लासकयुवा ताण्डविकः, आक्षिक आखण्डलः, कितवो भीमकः, शैलालियुवा शिखण्डकः, नर्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, मन्त्रसाधकः करालः, असुरविवरव्यसनी लोहिताक्षः, धातुवादविद्विहंगमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकश्चको-

जयश्रीः

घेयौ । गान्धर्वं सङ्गीतशास्त्रं तस्योपाध्यायः शिक्षकः सङ्गीतोपदेष्टा दर्दुरकाख्यः । संवाहिका पादमर्दनकारिणी केरलिका नाम्नी । लासकश्चासौ युवा चेति लासकयुवा नर्तकतरुणः । ताण्डविकनामा । अक्षैर्दीव्यतीत्याक्षिको द्यूतकारः । आखण्डलनामा । कितवो धूर्तः । भीमकाख्यः । स्वयं यो नृत्यति स चासौ युवा चेति शैलालियुवा तरुणनटः । "शैलालिनस्तु शैलूषाः" इत्यमरः । शिखण्डकाख्यः । नर्तकी लासकी हरिणिकाभिधेया । पाराशरी भिक्षुः । "भिक्षुः परिव्राट् कमन्दी पाराशर्यपि मस्करी" इत्यमरः । सुमतिनामा । वीरदेवनामा क्षपणकः समयज्ञः । कथकः कथाकर्ता जयसेनाख्यः । शैवमतावलम्बी वक्रघोणः । मन्त्रसाधको मान्त्रिको मन्त्रसिद्धिसहितो वा करालाख्यः पुरुषः । असुरविवरे पाताले व्यसनं तज्ज्ञानानुशीलमस्त्यस्येति तादृशः । पातालज्ञाननिपुण इति यावत् । लोहिताक्षनामा । धातुवादं रसायनं वेत्तीति धातुवादविद् रसायनाभिज्ञः । विहङ्गमाख्यः ।

कथाभट्टीया

नामक लेखक, वीरवर्मा चित्रकार, कुमारदत्त लिपिकर्ता, जीमूत मृदङ्गवादक, सोमिल और ग्रहादित्य गायक, कुरङ्गिका सैरन्ध्री, मधुकर और पारावत वंशीवादक, दर्दुरनामक संगीतशिक्षक, पैर दबाने वाली केरलिका, नर्तक ताण्डविक, अक्षक्रीडक आखण्डल, भीमकनामक धूर्त, शिखण्डक नट, हरिणिका नर्तकी, सुमति भिक्षुकी, समयज्ञाता वीरदेव, कथाभट्ट जयसेन, वक्रघोण शैव, कराल मन्त्रशास्त्री, पाताल ज्ञान में निपुण लोहिताक्ष, रसायन का ज्ञाता विहंगम, दामोदर नामक दर्दुरवाद्यवादक, चकोराक्ष ऐन्द्रजालिक और ताम्रचूड नामक संन्यासी, बाणभट्ट के मित्र व सहायक थे । बाणभट्ट बालकपन से इन मित्रों के वशीभूत होकर देश देशान्तर के दर्शन के कौतूहल से ब्राह्मणों के योग्य अपनी प्राचीन संपत्ति के होने पर तथा विद्याप्रसङ्ग के जारी रहने पर भी अपने गृह से विदेशों

राज्ञः, मस्करी ताम्रचूडः। स एतैश्चान्यैश्चानुगम्यमानो बालतया निघ्नतामुपगतो देशान्तरालोकनकौतुकाक्षिप्तहृदयः सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु सति चाविच्छिन्ने विद्याप्रसङ्गे गृहान्निरगात्। अगाच्च निरवग्रहो ग्रहवानिव नवयौवनेन स्वैरिणा मनसा महतामुपहास्यताम्।

अथ शनैः शनैरत्युदारव्यवहृतिमनोहन्ति बृहन्ति राजकुलानि

जयश्रीः

दर्दुरं करोति दार्दुरिको वाद्यभेदवादकः। दर्दुरा भेकास्तान् ... इति दार्दुरिको भेकगुणागुणवेत्ता। दामोदराख्यः। इन्द्रजालं वेत्तीति ऐन्द्रजालिक इन्द्रजालविद्याज्ञाता। चकोराक्षनामा। ताम्रचूडाख्यमस्करी परिव्राट्। "मस्क गतौ" मस्कनं मस्करो ज्ञानं गतिर्वास्यास्तीति मस्करी "मस्करमस्करिणौ" इतीनिप्रत्ययः। एतेषां सुहृदां सहायानां च वर्णनात्कविः स्वस्य तत्तत्कलाभिज्ञतां प्राकाशयत्। स कविर्बाणः। एतैः पूर्वोक्तैरन्यैश्च कलाविद्भिः। अनुगम्यमानोऽनुस्रियमाणः। बालतया शिशुतया निघ्नतामधीनताम्। अस्वतन्त्रतामिति यावत्। उपगतः प्राप्तः। अन्यो देश इति देशान्तरं नगरान्तरं तस्यालोकने दर्शने कौतुकं कौतूहलं तेनाक्षिप्तमाकृष्टं हृदयं मानसं यस्य सः। ब्राह्मणजनानां विप्राणामुचितेषु योग्येषु पितृपितामहाभ्यामुपात्तेषु गृहीतेषु विभवेषु धनादिषु। सत्स्वपि वर्तमानेष्वपि विद्याप्रसङ्गे शास्त्रव्यसने चाविच्छिन्ने प्रवाहरूपेण वर्तमाने सति। गृहाद् गेहात्। निरगात् निश्चक्राम। ग्रहवानिव भूताविष्ट इव। निरवग्रहोऽस्वतन्त्रः। नवयौवनेन नवीनतारुण्येन। स्वैरिणा स्वतन्त्रेण मनसा चित्तेन महतां जनानामुपहास्यतां परिहासास्पदत्वमगात् प्रापत्।

अथेति। अथानन्तरम्। शनैः शनैर्मन्दं मन्दम्। अत्युदाराश्च या व्यवहृतयश्चेत्युदारव्यवहृतयोऽत्युदारव्यवहारास्ताभिर्मनश्चित्तं हरन्तीति मनोहन्ति मनोहराणि। असङ्कुचितव्यवहारमनोरमाणि बृहन्ति महान्ति राजकुलानि राजगृहान्

कथाभट्टीया

में चला गया। स्वतन्त्र बाणभट्ट भूताविष्ट के समान नवीन यौवन तथा स्वेच्छाचारी मन से महापुरुषों के उपहासास्पद हुआ। इसके अनन्तर धीरे २ उदार व्यवहार से मनोहर बड़े २ राजकुलों को देखता हुआ, उत्तम विद्याओं से

वीक्षमाणः, निरवद्यविद्याविद्योतितानि च गुरुकुलानि सेवमानः, महार्हालापगम्भीरगुणवद्गोष्ठीश्चोपतिष्ठमानः, स्वभावगम्भीरधीधनानि विदग्धमण्डलानि च गाहमानः, पुनरपि तामेव वैपश्चितीमात्मवंशोचितां प्रकृतिमभजत् । महतश्च कालात्तामेव भूयो वात्स्यायनवंशाश्रयामात्मनो जन्मभुवं ब्राह्मणाधिवासमगमत् । तत्र च चिरदर्शनादभिनवीभूतस्नेहसद्भावैः ससंस्तवप्रकटितज्ञातेयैराप्तै-

जयश्रीः

वीक्षमाणो विलोकमानः । निरवद्याः प्रशस्या या विद्यास्ताभिर्विद्योतितानि प्रकाशितानि । प्रशस्यशास्त्रप्रदीप्तानि । गुरुकुलानि शिक्षकगृहान् सेवमानो भजमानः । महार्हा अत्युच्चा ये आलापाः संवादास्तैर्गम्भीराणां धीराणां गुणवतां गुणिनां गोष्ठ्यः परिषदस्ताः । चतुरालापधीरगुणिपरिषद इति यावत् । उपतिष्ठमानः सेवमानः । स्वभावेन प्रकृत्या गम्भीरा धीरा या धीर्मतिः सैव धनं येषां तानि तथोक्तानि । सहजधीरमतियुक्तानि विदग्धानां दक्षानां । मण्डलानि व्रातान् च गाहमानः प्रविशन् । पुनरपि तामेव पूर्वोक्तामेव वैपश्चितीं विद्वज्जनोचिताम् । आत्मनः स्वस्य वंशस्य कुलस्योचितामर्हाम् । स्वकुलार्हामिति यावत् । प्रकृतिं स्वभावमभजत् सिषेवे । नानाविधानि वस्तुजातानि पश्यन् , अनेकविधमानवसहचरतां च कुर्वन्नपि स्ववंश्यजनोचितां प्रकृतिं वैदुष्यं च प्रापदिति भावः । महतश्च बहोः कालात् समयात् । भूयः पुनः । तामेव वात्स्यायनवंशाश्रयां निजकुलाश्रयाम् । आत्मनः स्वस्य जन्मभूमिं जननभुवम् । ब्राह्मणाधिवासं विप्राध्युषितपुरम् । अगमत् जगाम । तत्र च स्वदेशे च । चिरदर्शनात् बहुकालं यावद्दर्शनात् । अभिनवीभूतो नवीनीभूतः स्नेहः प्रेम सद्भावश्च येषां ते तैस्तथोक्तैः । नूतनीभूत-

कथाभट्टीया

युक्त गुरुकुलों में निवास करता हुआ, उत्कृष्ट संभाषणों से गम्भीर गुणवानों की गोष्ठी में सत्सङ्ग करता हुआ, स्वभाव से ही गम्भीर बुद्धिमान् चतुर पुरुषों के मण्डलों में सहवास करता हुआ, पुनरपि अपने वंश के योग्य विद्वत्प्रकृति को प्राप्त हुआ । बहुत समय के अनन्तर अपने वंश से आश्रित अपनी जन्मभूमि को प्राप्त हुआ । वहाँ चिरकाल के दर्शन से नवीन स्नेह वाले, परिचय से बन्धुत्व को प्रकट करने वाले, आप्त पुरुषों से उत्सव दिवस के समान अभिनन्दित

रुत्सवदिवस इवानन्दिताभिगमनो बालमित्रमण्डलस्य मध्यगतो मोक्षसुखमिवान्वभवत् ।

इति श्रीवाणभट्टकृतौ हर्षचरिते वात्स्यायनवंश-
वर्णनं नाम प्रथम उच्छ्वासः ।

---

जयश्रीः

प्रेमसौहार्दैरिति यावत् । ससंस्तवं सपरिचयं प्रकटितं ज्ञातेयं बन्धुत्वं यैस्ते स्तैस्तथोक्तैः । ज्ञातीनां कर्म ज्ञातेयम् । "कपिज्ञात्योर्ढक्' इति ढक्प्रत्ययः । सपरिचयप्रकाशितबन्धुत्वैरिति यावत् । आप्तैर्बन्धुभिः । उत्सवदिवस इव महोत्सवदिनमिव । आनन्दितं प्रशंसितमभिगमनमागमनं यस्यासौ तथोक्तः । प्रशंसितागमन इति यावत् । बालमित्रमण्डलस्य बालकालीनसुहृत्समूहस्य मध्यगतो मध्यस्थितः । मोक्षसुखमिवात्यन्तिकानन्दमिवान्वभवत् अनुभूतवान् । यथा योगिनो मोक्षसुखमनुभवन्ति तथासावपि निरतिशयानन्दमनुबभूव । तथा च योगिपक्षे—आप्तैर्योगिभिः । "रजस्तमोभ्यां निर्मुक्तास्तपोज्ञानबलेन ये । येषां त्रैकालममलं ज्ञानमव्याहृतं सदा । आप्ताः शिष्टा विबुद्धास्ते" इत्याप्तलक्षणम् । बालो निस्तेजस्त्वाद्बाल इव प्रतीममानो यो मित्रो रविः सूर्यस्तस्य मडलं बिम्बं तस्य तथोक्तस्य । नवीनसूर्यबिम्बस्य मध्यगतः । "तपस्यन्तं रविं दृष्ट्वा निस्तेजा जायते रविः । मोक्षमार्गप्रयत्ने तु तेजो नैवास्य विद्यते" । इति रवेर्निस्तेजस्त्वमुक्तम् । सूर्यमण्डलं भित्वैवयोगी मोक्षमाप्नोतीति शास्त्ररहस्यम् । मोक्षसुखं निर्वाणसुखं योग्यनुबभूव । अत्र प्रथमपरिच्छेदे कविना यत् स्ववंशवर्णनं विस्तरशो विहितं तदाख्यायिकालक्षणोक्तनियमानुसारेणेति बोध्यम् । तथा चाख्यायिकालक्षणमग्निपुराणे—

"कर्तृवंशप्रशंसा स्याद् यत्र गद्येन विस्तरात् ।
कन्याहरणसंग्रामविप्रलम्भविपत्तयः ॥
भवन्ति यत्र दीप्ताश्च रीतिवृत्तिप्रवृत्तयः ।

कथासङ्गीया

बाल्यकाल के मित्र मण्डल के मध्य में स्थित बाणभट्ट ने योगी के मोक्ष सुख की तरह अत्यन्त आनन्द का अनुभव किया । योगी भी मित्र ( सूर्य ) मण्डल के मध्य में स्थित होकर ही मोक्षसुख का अनुभव करता है । यह कवि नें

जयश्रीः

उच्छ्वासैश्च परिच्छेदो यत्र सा चूर्णिकोत्तरा ॥
वक्त्रं चापरवक्त्रं च यत्र साख्यायिका मता ।

( अध्याये ३३७।१३-१९ श्लोकाः ) ।

अथ कविः प्रथमपरिच्छेदसमाप्तिं कथयति–इतीत्यादिना । इति शब्दः परिसमाप्तौ । बाणभट्टकृताविति कविनामकथनम् । हर्षचरित इत्याख्यायिकावर्णनीययोः कथनम् । वात्स्यायनानां वंशस्य वर्णनमिति प्रथमपरिच्छेदे वर्ण्यमानं वस्तूक्तम् । प्रथम उच्छ्वासः समाप्त इति शेषः । एवमुपरिष्टादपि द्रष्टव्यम् । 'हर्षस्य हर्षवर्धनस्य सम्राजश्चरितं हर्षचरितम् , तदधिकृत्य कृताऽऽख्यायिका हर्षचरितम् । "लुबाख्यायिकाभ्यो बहुलम्" इत्यनेन शैषिकाणप्रत्ययस्य लुप् । ततश्च "लुपि युक्तवद् व्यक्तिवचने" इत्यनेन च तस्य नपुंसकलिङ्गत्वम् । "हर्षस्य चरितं हर्षचरितम् , तदधिकृत्य कृतं गद्यकाव्यमुपचारात् 'हर्षचरितम्' उच्यते न तु तत्र प्रत्ययः क्रियते" इति श्रीभवदत्तशास्त्रिणो दाधिमथाः ।

कथाभट्टीया

आख्यायिका ( गद्यकाव्य ) के अनुकूल अपने वंश का परिचय प्रथम उच्छ्वास में विस्तार से किया है ।

कथाभट्ट श्रीनन्दकिशोरशर्मा साहित्याचार्य की कथाभट्टीया नामक हिन्दी टीका में हर्षचरित का प्रथम उच्छ्वास समाप्त हुआ ।

शुभम् ।



# अथ समाप्तिश्लोकाः ।

श्रीमज्जोधपुरं विराजिततमां राज्यं, तदन्तर्गतो
ग्रामः पोकरणः प्रसिद्धविभवैः सट्टाकुरै रक्षितः ।
ग्रामाख्याप्रथिताभिधानविलसत्तट्टाकुरैः पूजितं
नामावाळपदाङ्कतद्गुरुकुलं जागर्ति तत्रोन्नतम् ॥ १ ॥

तद्वंश्यरत्नं बुधवृन्दवन्द्यो विप्रोऽभवद् दाधिमथाग्रगण्यः ।
हरादिगोविन्दपदाङ्कनामा सौभाग्यसम्पत्सुयशःसमृद्धः ॥ २ ॥

श्रीमत्पोकरणाधिपः समभवद् वीराग्रिमः सालिम—
सिंहाख्यस्तनयामसौ सुरुचिरां जज्ञे च चांपावतीम् ।
निर्माप्य व्यतरत्स्वयं जयपुरे सा मन्दिरं सुन्दरं
यस्मै चन्द्रकुमारिका जयपुराधीशस्य पत्नी वरा ॥ ३ ॥

वैदुष्यप्रतिभादिसद्गुणगणप्रीतान्महेन्द्रोपमात्
प्रापद्राजगुरोः पदं जयपुराधीशाच्च यश्चामरं ।
राज्ञीस्थापितमन्दिरेऽप्यधिकृतिं राज्ये कथाभट्टता—
मभ्युत्थानमलङ्कृतां च शिबिकां विद्वत्सु मूर्धन्यताम् ॥ ४ ॥

श्रीनारायणनामकः समभवत्सूनुस्ततो मध्यम—
स्तत्पुत्रो जयचन्द इत्यभिधया ख्यातः कृती राजते ।
तस्य स्तस्तनयौ नयेन सहितौ विद्वद्गणे संस्तुतौ
श्रीमन्नन्दकुमारनन्दसुपदप्रोद्यत्किशोराह्वयौ ॥ ५ ॥

तत्र नन्दकिशोरेण साहित्याचार्यताजुषा ।
श्रीहर्षचरिते व्याख्या गोविन्दीगर्भजन्मना ॥ ६ ॥

वसन्तपञ्चमीघस्रे व्योमग्रहनिधीन्दुके ।
जयश्रीः प्रथमोच्छ्वासे कृताब्दः पूर्णतामगात् ॥ ७ ॥

इति श्रीजयपुरमहाराजमौजमन्दिरस्थपण्डितसभासभ्येन—राजगुरुकथाभट्टवंश्येन—वेदान्तभूषणोपाधिविभूषितेन—भूतपूर्वकाशिकगवर्नमेण्टसंस्कृतपुस्तकालयीप्रत्नतत्त्वान्वेषणापरायणेन—भूतपूर्ववाराणसेयहिन्दूविश्वविद्यालयीयपाठ्यनिर्धारकसमितिजुषा—जयपुरराजकीयसंस्कृतपाठशालाध्यापकेन—कथाभट्टश्रीनन्दकिशोरशर्मणा साहित्याचार्येण निर्मितायां हर्षचरितव्याख्यायां जयश्रियाः प्रथमोच्छ्वासे पर्यवसानम् ॥ १ ॥

## १८३७ वर्षे

## हर्षचरितस्य प्रथमोच्छ्वासे प्रश्नाः ।

१ अधोलिखिताः श्लोकाः संस्कृतया गिरा व्याख्यायन्ताम् ।

(क) सुखप्रबोधललिता सुवर्णघटनोज्ज्वलैः ।
शब्दैराख्यायिकाऽऽभाति शय्येव प्रातिपादकैः ॥

(ख) तरलयसि दृशं किमुत्सुका-
मकलुषमानसवासलालिते ।
अवतर कलहंसि ! वापिकां ।
पुनरपि यास्यसि पङ्कजालयम् ॥

(ग) कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥

२ अधस्तनान् गद्यसन्दर्भान् प्रकरणप्रदर्शनपुरःसरं व्याख्याय रेखाङ्कितानां समासानां प्रक्रिया निरूपणीया ।

(क) पार्श्वे च तस्य द्वितीयमपरसंश्लिष्टतुरङ्गम् , प्रांशुमुत्तप्ततपनीयस्तम्भाकारम् , परिणतवयसमपि व्यायामकठिनकायम् , नीचनखश्मश्रुकचम् , शुक्तिखलतिम् , ईषत्तुन्दिलम् , रोमशोरःस्थलम् , अनुल्वणोदारवेशतया जरामपि विनयमिव शिक्षयन्तम् , गुणानपि गरिमाणमिवानयन्तम्,·······पुरुषम् ( अद्राक्षीत् )

(ख) सा त्ववादीत् । देवि जानास्येव माधुर्यं विषयाणाम् , लोलुपतां चेन्द्रियग्रामस्य, उन्मादितां च नवयौवनस्य, पारिप्लवतां च मनसः। प्रख्यातैव मन्मथस्य दुर्निवारता । अतो न मामुपालम्भेनोपस्थातुमर्हसि । न च बालिशता चपलता चारणता वा वाचालतायाः कारणम् । न किञ्चिन्न कारयति असाधारणी स्वामिभक्तिः ।

(ग) यस्मादजायन्त वात्स्यायना नाम गृहमुनयः आश्रितश्रौताः, कृतकुक्कुटव्रता अप्यवैडालवृत्तयः,······परिहृत-कपट-कौरकुचीकूर्चीकृताः, वर्णत्रयव्यावृत्तिविशुद्धान्धसः, धीरधिषणावधूतान्येषणाः, असङ्कसुकस्वभावाः, अनिस्त्रिंशा विद्याधराः, अजडाः कलावन्तः, ····अकुसृतया भोगिनः, अस्तम्भाः पुण्यालयाः, अव्यालाः कामजितः असाधारणा द्विजातयः ।

## १८३८ वर्ष

## हर्षचरितस्य प्रथमोल्लासे प्रश्नाः ।

१ अधोलिखिताः श्लोकाः संस्कृतया गिरा व्याख्यायन्ताम्

(क) पदबन्धोज्ज्वलो हारी कृतवर्णक्रमस्थितिः ।
भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायते ॥

(ख) अन्यवर्णपरावृत्त्या बन्धचिह्नानिगूहनैः ।
अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥

(ग) निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥

२ अधोलिखितान् गद्यभागान् प्रकरणप्रदर्शनपुरःसरं व्याख्याय रेखाङ्कितानां समासानां प्रक्रियां निरूपयत—

(क) का चेयमत्रभवती भवत्याः समीपे समवाय इव विरोधिनां पदार्थानाम् । तथाहि । सन्निहितबालान्धकारा भास्वन्मूर्तिश्च, पुण्डरीकमुखी हरिणलोचना च, बालातपप्रभाधरा कुमुदहासिनी च कलहंसस्वना समुन्नतपयोधरा च, करभोरुर्विलम्बितगमना च, अमुक्तकुमारभावा स्निग्धतारका च ।

(ख) अथ सारस्वतो मातुर्महिम्ना यौवनारम्भ एवाविर्भूताशेषविद्यासम्भारस्तस्मिन् सवयसि भ्रातरि प्रेयसि प्राणसमे सुहृदि वत्से वाङ्मयं समस्तमेव सञ्चारयामास । चकार च कृतदारपरिग्रहस्यास्य तस्मिन्नेव प्रदेशे प्रीत्या प्रीतिकूटनामानं निवासम् । आत्मनाप्याषाढी, कृष्णाजिनी, वल्कली, अक्षवलयी, मेखली, जटी च भूत्वा तपस्यतो जनयितुरेव जगामान्तिकम् ।

(ग) अथ शनैः शनैरत्युदारव्यवहृतिमनोहन्ति बृहन्ति राजकुलानि वीक्षमाणः, निरवद्यविद्याविद्योतितानि च गुरुकुलानि सेवमानः, महार्हालापगम्भीरगुणवद्गोष्ठीश्चोपतिष्ठमानः, स्वभावगम्भीरधीधनानि विदग्धमण्डलानि च गाहमानः, पुनरपि तामेव वैपश्चितीमात्मवंशोचितां प्रकृतिमभजत ।

## १९३९ वर्षे

## हर्षचरितस्य प्रथमोच्छ्वासे प्रश्नाः ।

१ अधोलिखिताः श्लोकाः संस्कृतया गिरा व्याख्यायन्ताम्—

(क) सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयः शरभा इव ॥

(ख) नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ॥

(ग) कवीनामगलद्दर्पो नूनं वासवदत्तया ।
शक्त्येव पाण्डुपुत्राणां गतया कर्णगोचरम् ॥

२ अधोलिखितान् गद्यभागान् प्रकरणप्रदर्शनपुरःसरं व्याख्याय रेखाङ्कित-समासानां प्रक्रियां निरूपयत—

(क) कुपितस्य हि प्रथमान्धकारिणी भवति विद्या ततो भ्रुकुटिः । आदाविन्द्रियाणि रागः समास्कन्दति चरमं चक्षुः । आरम्भे तपो गलति पश्चात्स्वेदसलिलम् । पूर्वमयशः स्फुरति, अनन्तरमधरः । कथं लोकविनाशाय ते विषपादपस्येव वल्कलानि जातानि । अनुचिता खल्वस्य मुनिवेशस्य हारयष्टिरिव वृत्तमुक्ता चित्त-वृत्तिः । शैलूष इव वृथा वहसि कृत्रिममुपशमशून्येन चेतसा तापसाकल्पम् ।

(ख) दृष्ट्वा च तं तदीयरामणीयकहृतहृदया तस्यैव तीरवासमरोच-यदुवाच च सावित्रीम् । सखि मधुरमयूरविरुतयः कुसुमपांशु-पटलसिकतिलतरुतलाः पुष्पपरिमलमत्तमधुपश्रेणीवीणारणित-रमणीयाः प्रीणयन्ति मां मन्दाकिनीद्युतेरस्य महानदस्योपकण्ठ-भूमयः । पक्षपाति च मे मनोऽत्रैव स्थातुमिति । अभिनन्दित-वचना च तथेति तया तस्य पश्चिमे तीरे वासमरोचयत ।

(ग) पार्श्वे च तस्य द्वितीयं संसक्ततुरगं परं प्रांशुमुत्तप्ततपनीयस्तम्भाव-दातं परिणतवयसमपि व्यायामबलीयांसं नीचनखश्मश्रुकेशं शुक्तिखलतिमीषत्तुन्दिलमनुक्षणोदारवेशतया जरामपि विनयमिव शिक्षयन्तं गुणानपि गौरवमिवापादयन्तं महानुभावतामपि शिष्य-तामिव जनयन्तमाचार्यस्याचार्यकमिव कुर्वाणं धवलवारबाण-धारिणं लसत्तनुदुकूलपट्टिकापरिश्लिष्टमौलिं पुरुषमद्राक्षीत् ।

## १९४० वर्ष

## हर्षचरितस्य प्रथमोच्छ्वासे प्रश्नाः ।

१ निम्ननिर्दिष्टयोरन्यतरद् गद्यं सुस्फुटमन्वयमुखेन पर्यायैर्व्याख्यायताम् । रेखाङ्कितपदानां विग्रहान् प्रदर्श्य समस्तेषु समासनाम, अन्यत्र प्रकृतिप्रत्ययविभागश्च लिख्यताम्—

(क) का चेयमत्रभवती भवत्याः समीपे समवाय इव विरोधिनां पदार्थानाम् । तथा हि—सन्निहितबालान्धकारा भास्वन्मूर्तिश्च, पुण्डरीकमुखी हरिणलोचना च, बालातपप्रभाधरा कुमुदहासिनी च, कलहंसस्वना समुन्नतपयोधरा च, कमलकोमलकरा हिमगिरिशिलापृथुनितम्बा च ।

(ख) आजगाम च मधुमास इव सुरभिगन्धवहः, हंस इव कृतमृणालधृतिः, मलयानिल इवाहितसरसचन्दनधवलतनुलतोत्कम्पः, अन्तःस्फुरता मत्तमदनकरिकर्णशङ्खायमानेन प्रतिमेन्दुना प्रथमसमागमविलासविलक्षस्मितेनेव धवलीक्रियमाणैककपोलोदरो मालतीद्वितीयो दधीचः ।

२ निम्ननिर्दिष्टस्य गद्यस्य पूर्णो भावार्थः स्वसंस्कृतेन प्रदर्श्यताम्, प्रतिपदव्याख्या न कार्या—

सखि ! त्रिभुवनोपदेशदानदक्षायास्तव पुरो जिह्वा जिह्वेति मे जल्पन्ती, जानास्येव यादृश्यो विसंस्थुला गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः क्षणभङ्गिन्यो दुरतिक्रमणीया न रमणीया दैवस्य वामा वृत्तयः। निष्कारणा च निकारकणिकापि कलुषयति मनस्विनोऽपि मानसमसदृशजनादापतन्ती । अनवरतनयनजलसिच्यमानश्च तरुरिव विपल्लवोऽपि सहस्रधा प्ररोहति ।

३ निम्ननिर्दिष्टेषु वाक्येषु कयोश्चिद् द्वयोः पूर्ण आशयो हिन्दीभाषया प्रकाश्यताम्—

(क) आलोकनकृतार्थाय चक्षुषे स्पृहयन्ती प्रेरयत्युदन्तश्रवणकुतूहलिनी श्रोत्रवृत्तिः ।

(ख) सञ्चरत्सिद्धसुन्दरीनूपुररवानुसारिणि च मन्दं मन्दं मन्दाकिनीहंस इव समुपसर्पति शशिनि गगनतलम् ।

(ग) हंसपक्षतालवृन्तव्रातवातवितैः शोणशीकरैरसिक्तापप्यार्द्रतामगात ।